# लाट्यायण श्रौत सूत्र

श्रीगणेशाय नमः ।

## लाट्यायनीये श्रौतसूत्रे प्रथमः प्रपाठकः

### अथ प्रथमा कण्डिका

अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः १ मन्त्रविधिश्चादिग्रहणेन २ उत्तरादिः पूर्वान्तलक्षणं ३ एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्य्यादनादेशे ४ यावद्यजुरनादिष्टान्तान् मन्त्रान् ५ ऋचश्चादिग्रहणेन ६ ऋत्विगार्षेयोऽनूचानः साधुचरणोवाग्म्यन्यूनाङ्गोनतिरिक्ताङ्गो द्वय-सतश्चानतिकृष्णोऽनतिश्वेतः ७ याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः ८ सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रात्याचक्षीत ९ महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत १० तन्न जह्यादप्रोक्तेपि करिष्यामीति विदित्वा ११ आवसथः सोमप्रवाकाय लवणम-न्नन्दध्नाहारयेत् १२ प्रहिणुयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्म्मभ्यः १३ प्रागुदक्प्रवणन्देवयजनं लोमशमवृक्षं समं १४ पुरस्ताच्चास्यापः स्युः १५ तदभावे महावृक्ष उदपानो महापथो वा १६ न चास्य स्थल-तरमदूरे स्यात् १७ देवयजनमात्रञ्च पुरस्तात् १८ विपर्यस्या-भिचरणीयेषु स्थलादन्यद्देवयजनमात्राच्च १९ स्वयं ब्रजेत्क्रय उपवसथ्ये वा २० उदङ्ङेव तु गृहेभ्यः प्रथमं देवो देवमेत्विति २१ दूरं ब्रजित्वा विहाय दौष्कृत्यमिति २२ बद्धानामासीति पन्थानमापद्य २३ उत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरोभूरिति २४ यजुरन्तरयेन्वाहारन्धानञ्जय्यः २५ उपेक्षणं शाण्डिल्यः २६

इति प्रथमस्य प्रथमा कण्डिका

### अथ द्वितीया कण्डिका

पृथक् सावित्रीपादैर्मधुपर्कस्य पिबेत् १ तत्रैतदाहरन्ति विष्टरं पादप्रक्षालनमर्घ्यमाचमनीयं मधुपर्कमिति २ तस्य पिबेत् ३ इद-दन्नमयं रस इमा गावः सहश्रियेति तु पुरस्तादेकैकस्य ४ वाग्वहु बहु मे भूयादिति प्रथमस्योपरिष्टात् प्राणो वै वाचो भूयान् बहुर्मे भूयो भूयादिति द्वितीयस्य मनो वाव सर्वं सर्वं मेभूयादिति तृतीयस्य ५

सर्वे स्वाहाकारान्ताः ६ रसोसि वानस्पत्यो रसं मयि धेहीति मधु-मन्थस्य पिबेदिति गौतमो वानस्पत्य इति प्रवचनं ७ तथा दधि-मन्थोदमन्थयोः पयस्योऽपयस्य इति तु रसादेशः ८ एतेनैव प्रवचने कालिन्दः सारस्वत इति वा ९ शेषं ब्राह्मणाय दद्यात् १० तदभावेऽद्भिः संप्रोन्द्याब्राह्मणाय ११ कुरुतेति गवि प्रोक्तायां ब्रूयात् १२ उत्सृजत गां तृणानि गौरत्विति वा १३ सर्वेषां यज्ञोपवी-तोदकाचमने नित्ये कर्मोपयतां १४ अव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः १५ प्राङ्मखकरणञ्चानादेशे १६ क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वान्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वाऽवतिष्ठेत १७ अध्वर्य्युसम्प्रैषꣳ सर्वत्राकाङ्क्षेत् सुब्रह्मण्यायाम् १८ रश्मी धारयञ्छाखया प्रेष्येद्गावौ दक्षिणं पूर्व्वं १९ सुब्रह्मण्योमिति त्रिराह्वयेत्प्राचि वर्त्तमाने २० षट्कृत्वः प्रतीचि २१ पूर्व्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य तामेवैषामनूत्क्रम्य यथार्थं स्यात् २२ दक्षिणमनड्वाहꣳ सुब्रह्मण्याय दद्यात् २३ उभाविति शाट्यायनकं विज्ञायते कर्मसंयोगात् २४

इति प्रथमस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

आतिथ्यायाꣳ सꣳस्थितायां दक्षिणस्य द्वारबाहोः परस्तात्तिष्ठ-न्नन्तर्वेदिदेशेऽन्वारब्धे यजमाने पत्न्याञ्च सुब्रह्मण्योमिति त्रिरुक्त्वा निगदं ब्रूयादिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जारकौशिकब्राह्मणगौतमब्रुवाणेतावदहे सु-त्यामिति यावदहे स्यात् १ अद्येति समानाहनि २ देवा ब्राह्मण आगच्छतागच्छतागच्छतेति गौतमः ३ आगछेति पूर्वं देवाह्वानाद्धा-नञ्जय्यः ४ आगच्छ मघवन्नित्येके ५ पूर्व्वयोः प्रणवयोर्विरमेत् ६ मेने ब्रुवाणयोः ७ षणे जारे चाग्नेय्याम् ८ पृथग्यजते शब्देषु च ९ एवं त्रिः १० आहूय ११ पत्नीयजमानावुपहवमिच्छमानौ सुब्रह्म-ण्योपह्वयस्वेति १२ उपहूतइत्युपहवः १३ उपहूय यथार्थꣳ स्यात्

१४ एवꣳ सर्वेषपसदन्तेषु १५ याश्चोद्ध्वर्मुपसद्य उत्करे तु तत्र तिष्ठन् १६ प्राक् सुत्यादेशान्नामग्राहः १७ अग्नीषोमीयवपायाꣳ हुतायाम् परिहृतासु वसतीवरीषु प्रातरनुवाकोपक्रमवेलायामसौ यजत इति प्रत्येकं गृह्णीयाद्यजमाननामधेयान्यमुष्य पुत्रः पौत्रो नप्तेति पूर्वेषां १८ अथावरेषां यथाज्येष्ठꣳ स्त्रीपुꣳसां ये जीवेयुः १९ जनिष्यमाणानामित्युक्त्वा सत्यादेशप्रभृति समापयेत् २० याग्नीषोमीयवपायां लुप्ता सा साद्यःक्रेषु २१

इति प्रथमस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

अग्निष्टुत्स्वाग्नेयो निगदः १ तत्र गौतमीयमग्न आगच्छ रोहिताभ्यां वृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरस ब्राह्मणाङ्गिरस ब्रुवाणेति प्राक् सुत्यादेशात् २ देवानाꣳ स्थानेऽग्नयः ३ अथ धानञ्जय्योऽग्न आगच्छ रोहितव आगच्छ भरद्वाजस्याजसहसः सूनो वारावस्कन्दिन्नुषसो जारेत्याङ्गिरसप्रभृतिसमानम् ४ इन्द्रꣳ शक्रेति ब्रूयाद्विश्व इति देवाननिरुक्तेषु ५ अनिरुक्तप्रातःसवनयोश्च ६ अभि-षेचनीयदशपेयावन्तरेण सदा नामग्राहः ७ अहर्गणेष्वहराद्यन्तयो-राह्वयेत् ८ उत्तरार्थाहरन्तिकी ९ अग्नीषोमीयप्रभृत्यहीनेषु सर्वाः सनामग्राहाः १० दीक्षानुपूर्वेण दीक्षितानाꣳ सत्रेषु नामग्राहः ११ ऊद्ध्र्वमतिरात्रादग्रहणम् १२ तस्यान्ते श्वः सुत्या गौतमस्य १३ नार्मेधान्त एके १४ अद्य सुत्या शाण्डिल्यस्य १५ अनाह्वानं धानञ्जय्यस्तिसृषु चोत्तमासु नामग्राहः १६ उत्तमयोरिति गौतमः १७ तथा सत्यग्नीषोमीयवपायामग्रहणं धानञ्जय्योऽनाह्वानं वा १८ सर्वत्र सत्रेष्वग्रहणꣳ शाण्डिल्यः १९ ऊद्ध्र्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे २० द्वे वा २१ सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये २२ कौण्डपायिनतापश्चितयोर्द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानञ्जय्यः २३ सुत्यामागच्छेतीतराः २४ ऊद्ध्र्वं चातिरात्रात् प्रथमस्य सारस्वतस्य प्राक् श्वः सुत्यायाः २५ कौण्डपायिनसार-

स्वतयोरिष्ट्ययनेषु सुत्यावच्छाण्डिल्यः २६ तथाग्निहोत्रमासे तथाग्निहोत्रमासे २७

इति प्रथमस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

सर्वत्रानादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत् स्वासु १ तृचापत्तीनि तृचेषु त्रिरितराणि २ अन्तरेण चात्वालोत्करौ सञ्चरः सर्वत्रानादेशे ३ तदाप्रानं तीर्थं ४ अग्नौ चीयमाने पश्चिमेन पुच्छङ्गत्वा दक्षिणेऽपिकक्षे तिष्ठेद्यत्र वोपदध्युः ५ पश्चिमेन पक्षावपिकक्षौ ६ पूर्वेणोपप्लवौ ७ पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे स्वयमातृण्णासु च शर्करासु व्याहृतिसामानि गायेद् यजमानꣳ सत्यं पुरुषो भूर्भुवः स्वरित्येतासु पृथक् ८ तेषाꣳ स्थाने स्वयं चिन्वान ऋतनिधनमाज्यदोहं पुरुषव्रतमेकानुगानं रथन्तरं वामदेव्यं बृहदिति ९ रथन्तरप्रभृतीनि विकल्पन्ते लोकसामभिरावृत्तैः १० सञ्चितमग्निं दक्षिणेन गत्वाग्न आयूꣳषीति प्रत्यङ्मुखस्तिष्ठंश्छिरसि गायत्रं गायेन्निरुक्तम् ११ प्रत्याव्रज्य रथन्तरं दक्षिणे पक्ष उदङ्मुखः पश्चाद्वा प्राङ्मुखः १२ पश्चिमेन पुच्छं गत्वा बृहदुत्तरे पक्षे दक्षिणामुखः पश्चाद्वा प्राङ्मुखः १३ प्रत्याव्रज्य यज्ञायज्ञीयं पुच्छे संवत्सरश्चेद्दैक्षः सौत्यो वा १४ ऋतुष्ठायज्ञायज्ञीयमन्यत्र १५ वामदेव्यं दक्षिणेऽपिकक्षे तिष्ठन् गायेत् प्रजापतिहृदयमुत्तरे १६ एतानि गौतम उत्तरेणाग्निं गत्वा १७ एतान्येव प्रदक्षिणं प्रत्यन्ताद्धानञ्जय्यो यज्ञायज्ञीयं पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यम् १८ दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं ये पक्षयोः शाण्डिल्यः १९ शिरसि च गीत्वोत्तरे पक्षे २० यथागीतमितराणि २१ उत्तरे चोपप्लवे स्वꣳ हृदयमालभ्य प्रजापतिहृदयमध्वर्युपथे श्यैतम् २२

इति प्रथमस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

प्रवर्ग्यवत्युत्तरेण सम्राडासन्दीं गत्वा पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्यग्नायिरिति गायत् पदाय पदाय स्तोभेत् १ निधनायैव स्तौभीं वाचं विसृजेत् २ उपग्रहप्रभृतीनि स्वरयन्त उपेयुर्ये घर्म उपयुक्ताः स्युः ३ पत्नी च ४ एवं मध्ये ५ प्राप्य चाहवनीयायतनम् ६ परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम् ७ इष्टाहोत्रीयं परिषिक्ते ८ तस्य सर्वे निधनमुपेयुः ९ द्वीपं चेद्धर्मपात्राणि हरेयुर्नाकाङ्क्षेत परिषेचनम् १० श्यैतं प्रत्याव्रजꣳस्तृचे वैकस्यां वा ११ यजमानो निधनमनूपेयात् १२ पूर्वया द्वारा प्रपद्योत्तरेणाग्नीन्गत्वा पश्चाद्गार्हपत्यस्य तिष्ठन् महावीरायतनं प्रेक्षमाणो वामदेव्यं गायेदिति धानञ्जय्यः १३ श्यैतान्तानीति शाण्डिल्यः १४ गणः सामान्युत्तराणि १५ आभिरूप्यात् कर्त्तव्यानीत्येके १६ न वा कुर्य्यात् १७ स्वे वा यज्ञे कुर्य्यादित्येके १८ दीक्षणीयायां तार्क्ष्यसामनी गायेत्त्यमूष्वित्येते १९ प्रायणीयायां प्रवद्भार्गवं २० उदयनीयायामुद्वत् २१ आतिथ्यायां गायत्रीसामौशनम् २२ अञ्जन्ति घर्मं तत्र शार्ङ्गम् २३ रजतजातरूपे उपदधति तच्छुक्रचन्द्रे २४ अभीन्धत्ते तद्धर्मस्य तन्वौ २५ रुचितं प्राहुस्तद्धर्मस्य वा रोचनमिन्द्रस्य वा २६ धेनू उपसृजन्ति तद्धेनु २७ तस्य देवतायै सोपायं स्तोभमाहरेन्न पादायेति गौतमः २८ उत्तमं पादं पुनरभ्यस्येद्यथा पञ्चनिधने वामदेव्ये २९ पय आहरन्ति तत्पयः ३० आसिञ्चन्ति तत्सिन्धुसामा त्वा विशन्त्विति ३१ शफाभ्यां परिगृह्णन्ति तद्वसिष्ठस्य शफौ ३२ ह्रियमाणे व्रतपक्षौ ३३ हुतेश्विनोर्व्रते अहोरात्रयोर्वा ३४ रौहिणाभ्यां पुरोडाशाभ्यां चरन्ति तद्राजनरौहिणके ३५ परिघर्मꣳ सम्राडासन्द्याꣳ समारोपयन्ति तदारूढवदाङ्गिरसमित एत इति स्वर्णिधनं ३६ ऋङ्मयो यजुर्मयः साममयो घर्मो भवतीति ह्याह ३७ अग्निं प्रणयन्ति तत्राग्नेर्व्रतम् ३८ अग्नीषोमौ तत्रोभयोर्व्रते ३९ सुत्यायां यज्ञसारथ्यहरहः ४० सत्रे सत्रस्यर्द्धि ४१ उक्षा चेदनूबन्ध्य औक्ष्णो रन्ध्रे ४२ ऋषभ आर्षभं ४३ उन्नते त्रैककुभं ४४ वशायां वाशं ४५ अज आजिगं ४६ मेष और्णायवं ४७ पयस्यायां स्वरं पयोनिधनं

४८ उदवसानीयायामुद्वंशीयं ४९ उपक्रम्य समापयेदा क्रतोरपवर्गात् ५०

इति प्रथमस्य षष्ठी कण्डिका

अथ सप्तमी कण्डिका

औदुम्बरीमुच्छ्रयिष्यन् पूर्वेण देवयजनं गच्छेद्दक्षिणतश्चेदस्यावसथः स्यात् १ उत्तरेण यद्यन्यतः २ पूर्वौ सदसो द्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्नेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन्नध्वर्युणा सहोच्छ्रयेत् द्युतानस्त्वेति ३ आयोरिति श्वभ्रेऽव दध्यात् ४ अवधाय जपेन्नमः समुद्राय नमः समुद्रस्य चक्षसे । मा मा यूनर्वा हासीदूर्गस्यूर्ज्जोदा ऊर्ज्जम्मे देह्यूर्ज मे देह्यन्नं मे देह्यन्नं मे धेहीति ५ तान्न विसृजेदावच्छादनात् ६ अध्वर्य्युणाभिहुतायां जुहुयात् तस्यैवावृतान्तरेण विशाखे घृतेन द्यावापृथिवी आप्रीणाथाँ स्वाहेति पूर्वां ७ प्रजापतये स्वाहेत्युत्तरां ८ अन्यतरां वा स्वाहाकारद्वितीयां यथा भूमिमाज्यं प्राप्स्यतीति ९ अधस्ताद्विशाखस्य परिगृह्य जपेद्दिवि देवां दृँह मयि प्रजामिति १० अन्तरीक्षे वयाँसि दृँह मयि पशूनिति मध्ये ११ पृथिव्या मध्यौषधीर्दृँह मयि सजातानिति मूले १२ ऊर्द्ध्वं होमाद्याजमानं धानञ्जय्यः १३ स्वयमिति गौतमशाण्डिल्यौ १४ अवच्छाद्यमानायां दिव्यं छद्मसि सन्ततिनाम विश्वजनस्य छाया नमस्तेऽस्तु मामा हिंँसीरिति १५ दक्षिणेन श्वभ्रान् गत्वा परौ द्वार्यावन्तरेण प्रपद्यैतत् कुर्य्यादिति शाण्डिल्यः १६ उत्तरेणेति धानञ्जय्यः १७ गौत-मीयमितरत् १८ यथेतन्निष्क्रामेत् १९

इति प्रथमस्य सप्तमी कण्डिका

अथ अष्टमी कण्डिका

यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्नूमण ऊर्द्ध्वभरसन्त्वेति १ एतान्येवो-हस्थानानि यावन्तः स्युः २ यत्र तिष्ठन्त उच्छ्रीयमाणं पश्येयुरिति शाण्डिल्यः ३ अन्तर्वेद्येवेति धानञ्जय्यो न बहिर्वेदि यजुरवकल्पत

इति ४ विश्वरूपाणां गानं यजमानेनोक्तः प्रत्याचक्षीत ५ गायेति चेदेव ब्रूयान्न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्या इत्यध्वर्य्युं ब्रूयात् ६ होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानश्च पूर्वया द्वारा प्रपद्यान्तरेण हविर्द्धाने पूर्वेण चक्रे उदङ्मुख उपविशेत् तूष्णीम् ७ पुरस्ताद् यजमानः प्रत्यङ्मुखः ८ युञ्जे वाचं शतपदीङ्गायेत् सहस्रवर्त्तनि गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता देवा ओकांसि चक्रिर इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानञ्जय्यः स्वाध्यायस्वरेण मनसैव यजमान उपस्वरेत् ९ त्रिषु त्रिषु पदेषु गायेदिति गौतमः पूर्वं पूर्वमतिसृजन् १० प्रगाथकारं वा ११ गीत्वा यथार्थं स्यात् १२ विश्वरूपाश्चेद्गायेत् ज्योतोᳪष्यपि गायेत् १३ परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतारमारमयित्वाग्रयणस्य वानुहिङ्कारं पवित्रं धारयन्नास्तावं वा प्राप्य स्तोमयोगादग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्य्यो ज्योतिर्ज्योतिः सूर्य्य इत्येतेषु पदेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत् १४ तानि नान्यत्र विश्वरूपाभ्यः १५ न चान्यत्र विश्वरूपात् ज्योतिष्टोमात् ज्योतिष्टोमात् १६

इति प्रथमस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

युगपत्कर्मसु सर्वेषूद्गातुर्दक्षिणमनु बाहुं प्रस्तोता सव्यं प्रतिहर्त्ता १ होता प्रातरनुवाकमनूच्याभूदुषा इति यदा ब्रूयादथवेदिमाक्रामेयुर्मृदाशिथिरेति २ बहिर्वेद्येतज्जपित्वा मा मा हिᳪसीरित्येतावतवेति धानञ्जय्यः ३ सवनमुखेषु च ४ यजुषाहरहरिति गौतमः ५ सकृत्क्रताविति शाण्डिल्यः ६ यावद्धाक्रामेयुरित्येके ७ हविर्द्धानं प्रवेश्यमाना वसतीवरीरनुप्रविशेयुः ८ तस्य रराटयामालभ्य विष्णोः शिर इति ९ इष ऊर्ज इति प्रविशन्तः १० अन्तरेणेषे बाहूनवहृत्य पार्ष्णोरनुद्यच्छन्तो युनज्मीति राजानमभिमृशेयुर्यः प्रातःसवनाय ११ अविभक्तश्चेत्सर्वम् १२ नचेत्प्राप्नुयुर्देशेनैव १३ प्रस्तोता प्रथमो-

ऽतिसर्पेत् १४ तत उद्गाता १५ ततः प्रतिहर्त्ता १६ दक्षिणस्य हविर्द्धानस्य पश्चात् सव्यावृत उपविशेयुर्ऋतस्य सदन इति १७ पुरस्ताच्चोपरिष्टाच्चर्चः सर्वत्र जपेयुर्यासु करिष्यन्तः स्युः १८ अत्र तु बहिष्पवमानस्य १९ अभिषुते राजन्यृतपात्रमसीति द्रोणकलश-मालभ्य वानस्पत्य इति प्रोहेयुः २० दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत २१ अक्षञ्चेदुपहन्युः पुनः प्रोहेयुः २२ अन्तरेणाक्षविष्कम्भौ दशापवित्रं प्रास्येदनुपघ्नन् २३ संहितौ चेदुभावुपरि २४ सर्वं रथो-पस्थमुपर्युपरि २५ उत्तरेण रथजङ्घाᳫं रथश्चेत् २६

इति प्रथमस्य नवमी कण्डिका

## अथ दशमी कण्डिका

प्रत्याव्रज्य ग्राव्णो युञ्ज्यात् प्रदक्षिणमष्टमदेशेषु स्थवीयांस्यभ्यन्तराणि कृत्वा १ तानि मुखानि २ दक्षिणार्द्ध्यपूर्वार्द्ध्यं प्रथमम् ३ तान-भिमृश्य जपेयुर्मरुत इति ४ ऋतसदन एतज्जपित्वा युक्ता स्थ वहतेत्येतावतैवेति धानञ्जय्यः ५ पश्चात् दक्षिणतो वा द्रोणकलशम-ध्यूहेयुरिदमहमिममिति यजमानशब्दं सर्वत्र यथार्थं कुर्युः ६ अनुजपेयुरन्येन कृते मन्त्रौ ब्राह्मणविहितादन्यत्र ७ एष कल्पः काम्यानां द्वेष्यकल्पादन्यत्र ८ विपर्यस्य तु तस्मिंस्तूष्णीञ्च योजना-ध्यूहने ९ इदमहममुमिति दक्षिणापरमष्टमदेशं निरूहेत् १० द्वेष्य-प्रियकल्पयोर्मन्त्रौ राजन्यूहेत् ११ तस्य च विशमादिशेत्ताञ्चैवान्नाद्येन १२ उपांशुसवनो नाम ग्रावा पञ्चमस्तमुपरिष्टाद्द्रोणकलशस्य कुर्यात् राष्ट्रजिघांसुः प्रतीवेशां बलवतीं विशमादिशन् १३ एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः १४ तमेवेति धानञ्जय्यः १५ पृष्टानामन्ते पूर्वया द्वारा निष्क्रम्य काम्यᳫं शाण्डिल्यः १६ पवित्रेण द्रोणकलशᳫं संमृज्याद्वसवस्त्वेति बुध्नं रुद्रास्त्वेति मध्यमादित्यास्त्वेति बिलम् १७ एतेषामेकैकेन त्रिस्त्रिरनुसवनᳫं संमृज्यादिति धानञ्जय्यः १८ सर्वैः सर्वेष्विति शाण्डिल्यः १९ अवधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयुः पवित्रन्त इति २० सन्ततायां धारायामुद्गाता जपेत् प्र शुक्रे-

त्यमुष्य राज्यायेति प्रियँ राजानमादिशेत् २१ राज्ञो राज्यायेति वा यजमानस्यद्धर्यै राज्ञो राज्यायेति वा २२ सोमस्य राज्ञो राज्यायेति वा २३ सोमस्येत्येव ब्रूयात् सोमराजानो हि ब्राह्मणाः २४ आग्रयणं गृह्णन्नध्वर्युर्हिंकरोति तदा प्रवृणीरन्नग्निः प्रस्तोताहं मानुषो वृहस्पति-रुद्गाताहं मानुषो वायुः प्रतिहर्त्ताहं मानुष इति २५ न प्रवृणीरन्निति धानञ्जय्यः २६ प्रवृणीरन्नेवेति शाण्डिल्यः २७ अत्र वाचं यछेयुः २८ ऋतसदने वा २९ वेदिं वाक्रामन्तः ३० स्तुते बहिष्पवमाने विसृजेरन् ३१

इति प्रथमस्य दशमी कण्डिका

## अथ एकादशी कण्डिका

उत्तराद्धविर्द्धानात् ध्रुवस्थालीँ हरन्तः पश्चिमेनोद्गातृन् हृत्वा तेनैव प्रतिहरेयुः १ अध्वर्युं निष्क्रामन्तं प्रस्तोता सन्तनुयात् २ तमुद्गाता ३ उद्गातारं प्रतिहर्त्ता ४ तं ब्रह्मा ५ ब्रह्माणं यजमानः ६ न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरन् ७ तथाज्यँ राजानँ सर्वत्र ८ अध्वर्युणा हुते प्रवृत्तहोमौ जुहुयुर्गत्यानुपूर्व्येण बेकुरानामासि सूर्योमेति ९ सँसुतसोमे त्वधिकामुद्गाता जुहुयात् संवेशायोप-वेशायेति यथासवनं छन्दाँस्यादिशन् १० ऋचँ सामेति स्वाहा-कारान्तया तृतीयां सर्वत्र स एवेति शाण्डिल्यः ११ महागिरिमहान-दीरथाहर्वायुव्यवायेष्वसंसवः १२ पृथग्जनपदे च १३ अविद्वि-षाणमात्रादित्येके १४ हुत्वा जपेयुर्ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्येऽश्मानमाखणं पर्यूह इति १५ अध्वर्युमन्वावर्त्तेरन्सर्पन्तः १६ सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निरस्येयुर्योऽद्यसौम्य इति १७ चात्वालदेशं प्राप्याध्वर्यावुपविष्टे तस्मात् प्रत्यगुपविशेयुर्योम आत्मेति १८ प्रत्यङ्मुखः प्रस्तोता १९ उदङ्मुख उद्गाता २० पश्चि-मेनोद्गातारं गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्त्ता २१ सव्याधरानुपस्थान् कृत्वा द्यावापृथिव्योः सन्धिमीक्षमाणाः समानि मुखानि धारयन्तः २२ एवं सर्वस्तोत्रेष्वासीरन् २३ अपरेणो-

द्वातृंस्त्र्यवराद्ध्र्या उपगाः २४ चतुरवराद्ध्र्यानेके २५ त एतेनान्तरेणोपगायेयुर्हो इति मन्द्रस्वरेण सन्ततं सहवाच्येष्वारमन्तः २६ तस्मात्त्र्यन्तरेण स्तुयुः २७ समेन वा प्रातः सवने २८ एकान्तरेण वा २९

इति प्रथमस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मँस्तोष्यामः प्रशास्तरित्युद्गात्रे प्रयच्छेत् १ तेन दक्षिणां जङ्घामुपहत्य युञ्ज्यात् स्तोममग्नेस्तेजसेति २ अन्नं करिष्यामीति जपेत् ३ तूष्णीं चात्वालमुदपात्रञ्चावेक्षेरन् ४ सामासि प्रतिमाभाहीत्यादित्यम् ५ तूष्णीं वा ६ सकृद्धिङ्कृत्य बहिष्पवमानेन स्तुवीरन् ७ अहिङ्कृता प्रथमा रेतस्याः ८ हिङ्कृताः पराः ९ रथन्तरवर्णोऽत्तमाविसृष्टहिङ्कारां ११ तस्या ऊद्ध्र्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत् ११ अन्नमकरमिति स्तुत्वा जपेत् १२ श्येनोऽसीति प्रस्तरे यजमानं वाचयेत् १३ तँसर्वत्र स्तुत्वोपह्वयेरन् १४ संवर्चसेतीक्षकान्सहकारिणश्च प्रेक्षमाणो जपेत् १५ नमो गन्धर्वायेत्यादित्यम् १६ देशेनैवान्तर्हितश्चेत् १७ एतत्सर्वं कुर्यादुत्तरयोः पवमानयोः १८ प्रवरास्तु निवर्त्तन्ते चात्वालावेक्षणप्रभृति च प्राग्घिङ्कारात् १९ प्रवेशनसम्मार्जने चान्तरेण तृतीयसवने २० कुम्भन्तु तत्र सम्मृज्यादुत्तरे हविर्धाने यः पूर्वो द्रोणकलशावृता २१ तं पूतभृदित्याचक्षते तं पूतभृदित्याचक्षते २२

इति प्रथमस्य द्वादशी कण्डिका

इति प्रथमः प्रपाठकः समाप्तः

द्वितीयः प्रपाठकः

अथ प्रथमा कण्डिका

स्तोमयोगेऽग्निर्युनक्त्वीत्यतस्य स्थाने वायुर्युनक्त सूर्यो युनक्त्विति नानासवनयोः १ विहारं धानञ्जय्योऽग्नेस्तेजसा बृहस्पतिस्त्वेति

प्रातःसवन इन्द्रियस्येन्द्रियेण बृहस्पतिस्त्वेति माध्यन्दिने सूर्यस्येति तृतीयसवने २ सर्वैरेकैकं यथाम्नायꣳ शाण्डिल्यः ३ साम्ने साम्ने हिंकुर्युः ४ वृषकोऽसि स्वरोऽसीति यजमानवाचने ५ स्तुत्वा बहिष्पवमानेन प्रस्तरादुभयतश्चतुरङ्गुलं परिछिद्य तृणं चात्वाले प्रविध्येद्यदि स्तुतं यदि वाद्य सुष्टुतमर्वाक् स्तुतं यदि वातिष्टुतं यत्तयोरन्येन दिवमा रुहेमेममन्येन जयेम लोकमिति ६ तत्रैवोदपात्रं निनयेयुः समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छतारिष्टास्तन्वो भूयाः स्म मापरा सेचि नो धनमिति ७ बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्राग्दशभ्यः ८ आव्रज्याग्नीध्रीयं बहिष्पवमानर्चोऽधीयीरन् ९ अनुव्याहारिषीन्मामिति यमिति शंकेत तस्मा आग्नीध्रीय आहुतीवज्रं प्रहरेद्यज्ञ शं च त उप च ते नमश्च ते सत्योऽसि सत्यसंस्कृतस्तस्य ते य ऊनं योऽकृतं योऽतिरिक्तमदर्शत्तस्य प्राणेनाप्यायस्व स्वाहेति १० न व्यभिचरेतेति धानञ्जय्यः ११

इति द्वितीयस्य प्रथमा कण्डिका

## अथ द्वितीया कण्डिका

अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र १ आद्यन्तयोश्च सत्रेषु २ प्राग्धिष्ण्यविहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः ३ वैदत्रिरात्रे सत्रन्नयायं गौतमः ४ अहीनन्यायं धानञ्जय्यः ५ मन्द्रं प्रातःसवने स्तुवीरन्नुत्तरोत्तर्युत्तरयोः ६ मध्येन वोभयोः ७ एतस्यां वेलायां प्राश्नीयुः ८ अनुसवनन्तु सत्रेषु सवनमुखीयान् भक्षयित्वा सन्नेषु नाराशꣳसेषु ९ वपायां हुतायां धिष्ण्यानुपतिष्ठेरन् १० चात्वाले तु मार्जनं पूर्वꣳ सत्रेष्विदमापः प्रवहतावद्यञ्च मलञ्च यद्यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणमापो मा तस्मादेनसो दुरितात्पान्तु विश्वतो निर्मा मुञ्चामि शपथान्निर्मा वरुणादुत निर्मा यमस्य षड्विꣳशात्सर्वस्मादेव किल्बिषात् सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्म इति ११ सम्राडसीत्याहवनीयमुपस्थायोदञ्चो मत्वास्तावचात्वा-

लशामित्रानुदङ्मुखाः स्तुतो नभोसंमृष्ट इति १२ विभुरसीत्याग्नीध्री-यमुपतिष्ठेरन् १३ तमुत्तरेण सञ्चरः सर्वत्र १४ दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्द्धानमाहवनीयञ्च पृष्ठहोमाय १५ पूर्वस्याꣳ सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो वह्निरिति होतुर्धिष्ण्यम् १६ श्वात्र इति मैत्रावरुणस्य १७ तुथ उशिगन्धारिरवस्युरिति ब्राह्मणाछꣳसिप्रभृती-नामुदञ्चः १८ तत्रैव तिष्ठन्तः शुन्ध्युरिति मार्जालीयम् १९ ऋतधा-मेत्यौदुम्बरीम् २० समुद्र इति ब्रह्मणः सदनम् २१ उत्तरेण सदो गत्वान्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरिति प्रजहितम् २२ अज इति गार्हपत्यम् २३ सगरा इति दक्षिणाग्नेरायतनम् २४ कव्य इति दक्षिणं वेद्यन्तम् २५ तत्रैव तिष्ठन्तः सर्वान् समन्वीक्षमाणाः पात मेति २६ एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्यो बहुशब्दानेकवत् कुर्वन्तः २७

इति द्वितीयस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

रौरुकीणि चेत् कुर्युरादित्यं प्रथममुपतिष्ठेरन्नध्वनामिति १ आहवनी-यमुपस्थाय तमेवापि जोऽसि जायमान इत्यपि जोऽसि नवजात इति वा यमग्निमनुप्रहरन्ति तमभिप्रेत्य २ यदा चात्वालमथोत्करन्तुमुलो-ऽस्याक्रन्दकृत्वेति ३ यदा शामित्रमथ यत्रोबध्यन्निखनन्त्यूबध्यगो-होसि पार्थिव इति ४ यदाग्नीध्रीयमथ यत्राच्छावाक आसीनोहोत-र्युपहवमिच्छत्युपहव्योऽसि नमस्य इत्युपहव्योऽसि तनूपा इति वा ५ यदा ब्रह्मणः सदनमथ सदस्यस्य सदस्योऽसि मलिम्लुच इति ६ यदा दक्षिणं वेद्यन्तमथ प्राजापत्यमसीति पत्नीशालामैन्द्रमसीति सदो वैष्णवमसीति हविर्द्धानमैन्द्राग्नमसीत्याग्नीध्रीयं वैश्वदेवमसीति वा ७ अथ तथैव समस्तेन सर्वे स्थ सोम्यासः सर्वे सोमं पिबत सर्वे सोमस्य पीतिमानशध्वे पात मेति समानं परम् ८ ऋतस्य द्वारौ स्थ इत्यपरौ द्वारबाहू संमृज्य मा मा सन्ताप्तमिति प्रविशेयुः ९ दक्षिणेनौदुम्बरीं गत्वा तस्या उत्तरत उपविशेयुर्नमः सखिभ्यः इति १० पूर्वेण प्रस्तोतारं

प्रतिहर्त्ता गच्छेदेतस्याम् ११ एतस्यां वेलायाᳫँसमुपह्वयेरन् १२ सर्वे सत्रेषु १३ मिथोऽन्यत्र १४ सर्वे यजमानम् १५ द्वारबाहुसम्मार्जन-प्रभृत्येतत् सर्वं कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन् १६ याजमानब्रह्मत्वे चेदुद्गाता कुर्यादाग्नीध्रीयमुपस्थाय पूर्वेण परिक्रामेत् १७ सादसानुपस्थाय तत एवेक्षमाणः पात्नीशालान् १८ इतरथेतरौ १९

इति द्वितीयस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

ऋतस्य द्वारौ स्थ इति पूर्वौ द्वारबाहू संमृज्य दक्षिणस्य पुरस्तादुदङ्मुख उपविशेदिति धानञ्जय्यः १ पश्चात् प्रत्यङ्मुख इति शाण्डिल्यः २ उक्ते प्रवेशनोपवेशने ३ ऋत्विक्पथेन गत्वा समस्तोपस्थानप्रभृति समानम् ४ दक्षिणार्द्धे तु सदसः पूर्वमुपवेशनं प्रस्तोतुः प्रत्युपवेशनं ब्रह्मोपवेशनेन निरस्तः परावसुरिति दक्षिणातृणं निरस्येदावसोः सदने सीदामीत्युपविशेत् ५ भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्युक्त्वौ-दुम्बरीं गत्वोपविशेत् ६ अनूपविशेतामितरौ ७ एतेनानुपूर्वेण सर्वं यथासनञ्चिकीर्षेत् ८ ग्लायेच्चेदध्यौदुम्बर्येव ९ सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुप्रविशेद्ब्राह्मणाछᳫँसिनं वा १० तेनास्य समुपहवः स्याद्भक्षश्च समानः ११ बीभत्सेयाताञ्चेन्नानाचमसौ स्या-ताम् १२ सर्पत्सु शून्यं सदः कुर्यात् १३ तस्य दधिभक्षान्तं कर्म १४ स निवर्त्तेत सत्रेषु १५ विसᳫँस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य च सञ्चरः १६ तद्यथेतं तद्यथेतं १७

इति द्वितीयस्य चतुर्थी कण्डिका

## अथ पञ्चमी कण्डिका

चमसं प्रतिगृह्य प्रस्तोता दक्षिण ऊरावाधाय दक्षिणेन पाणिनापिधा-यासीत १ उपहूयमानायामिडायामनूपधारयेदनुपघ्नन् २ वषट्-कर्तुरनुभक्षᳫँ सर्वत्र भक्षयेयुर्मिथ उपहूय ३ उद्गाता प्रथमः ४ दक्षिणमनु बाहुन्दण्डं कृत्वा श्येन इत्यवेक्ष्येन्दविति द्विरल्पं

भक्षयेद्यथासवनं छन्दाꣳस्यादिशन् ५ ऊद्ध्र्व इति मुख्यान् प्राणानभिमृशेत सोम रारन्धीति हृदयं सोमगीर्भिरिति नाभिम् ६ एवमितरौ कुर्याताम् ७ प्रतिहर्त्ता पश्चात् ८ तꣳ स आप्याययेदभिमृश्याप्यायस्वेति ९ सर्वे वैतया गायत्र्या १० तां तृतीयसवने द्विर्ब्रूयुः सन्ते पयाꣳसीति माध्यन्दिने ११ गायत्र्यैवानुसवनमाप्यायनमिति शाण्डिल्यः १२ द्वितीयाः सवनेषु नाराशꣳसाः पूर्वयोश्च तृतीयौ १३ तेषामनवेक्ष्य भक्षणमवमैरिति प्रातःसवन ऊर्वैरिति माध्यन्दिने काव्यैरिति तृतीयसवने १४ पितृभिरिति सर्वत्रानुसꣳहरेत् १५ प्रत्यभिमर्शने यथाकामी १६ प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत् प्रथमं तृतीयसवने १७ आवर्त्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेद्यथा प्रस्तरम् १८ अनाह्रियमाणयोर्न मन्त्रं जह्यात् १९ तथैव जङ्घामुपहत्य युञ्ज्यात् स्तोमन्दीक्षायै तपसो मनसो वाच इति नाना धानञ्ज्य्यो यत्रानन्तराणि चत्वारि २० अन्तः सर्वेषां प्रजापतिस्त्वेति २१ उत्तरमुत्तरं लुप्येताऽल्पीयःसु २२ प्रथमेन वाजपेयसाम्नो युञ्ज्यात् २३ तत्प्रभृतीनि रात्रौ २४ तथातिरिक्तस्तोत्रेषु २५ सर्वैरेकैकं यथाम्नायꣳ शाण्डिल्यः २६ आवर्तिन्यायः सन्धौ २७ उपवसथ्येऽहनि न समामनेरन् २८

इति द्वितीयस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य खदिरस्य दीर्घसत्रेष्वेके प्रादेशमात्रीः कुशाः पृष्ठास्त्वक्तः समामञ्जतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः कारयित्वा गन्धैः प्रलिप्य सर्पिषा सत्रेष्वेके वैष्टुतेन वसनेन परिवेष्ट्य क्षौमशाणकार्पाशानां केनचिदुपर्यौदुम्बर्या वासयेत् १ ताꣳ श्वो भूते कुशैरूद्ध्र्वाग्रैर्वेष्टयित्वैवंजातीयेनैव वसनेन प्रदक्षिणमूद्ध्र्वदशेन परिवेष्ट्य स्पृष्टोऽनपश्रित उद्गायेत् २ धृष्टमपश्रयेतेत्येके ३ स्तोष्यमाणानां मध्ये वैष्टुतं वसनं प्राक्समासं वोदक्समासं वा उपरिदशमास्तीर्य्य प्रस्तोता कुशा विदध्यात् प्रस्तावान्तेषु ४

आद्येऽनेकप्रस्तावेषु ५ उदगग्रं प्रथमं विष्टावं प्राक्सꣳस्थं प्रत्यग्वा ६ तं पश्चिमेन मध्यदेशेनोदक्सꣳस्थं प्रागग्रं प्रत्यग्वा ७ तं पश्चिमेनोदगग्रं प्रत्यक्सꣳस्थमेवंविधाः पर्याया उत्तरोत्तराः ८ पर्यायविष्टावान्सन्दध्यात् ९ पर्यायादिषु हिंकारेण स्तुवीरन् १० उत्तमां प्रस्तुत्यैषेति शꣳसितारमीक्षेत ११ स्तुतस्य स्तुतमसीति यजमानवाचनम् १२ सवनसꣳस्थासु प्रशास्त्रोक्तो यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं बहिर्वेदि मूत्रं कुर्युः १३ वाचं यच्छेयुर्यावदुदक्याः स्युः १४ एतन्मृगतीर्थम् १५ तेन न भूयः शम्यापरासाद्गच्छेयुः १६ यो भूयो जिगमिषेदाप्रानेन स गच्छेत् १७

इति द्वितीयस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

अथ धिष्ण्यानुपतिष्ठेरन् समस्तेनोत्तरयोः सवनयोरिति गौतमशाण्डिल्यायनौ १ सर्वेणेति धानञ्जय्यः २ अनुपस्थानं शाण्डिल्यः ३ एवमेव निष्क्रम्य पृथक् स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन्यान्यूर्द्ध्वमुक्थेभ्यः ४ पर्यायेभ्यस्तु रात्रेः ५ यथासनमुपविश्य प्रस्तोता हविर्द्धानं गच्छेन्मध्यन्दिने ६ हुत आदित्यग्रहे प्रतिहर्त्तार्भवे ७ उभयत्र सर्वे सत्रेषु ८ पवमानयोरुत्तरयोर्धिष्ण्यविहरणे मार्ज्जालीयꣳ हरन्तः पश्चिमेन यजमानꣳ हृत्वा तेनैव प्रतिहरेयुः ९ मध्यन्दिनेन स्तुत्वा सत्रेषु दधिघर्मस्य भक्षयेयुः समुपहूय दधिक्राव्ण इति १० तस्या उत्तमं पदं दशमेऽक्षन्यभ्यस्येयुः ११ पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयꣳ सदश्च दक्षिणा नयेयुस्तीर्थेन १२ सर्वासान्देवस्य त्वेति पुरस्ताज्जपः १३ वरुणस्त्वेति यथादेवतं प्रतिगृह्णीयात् १४ यथाजाति मृगान् १५ अप्राणाश्च १६ पुंवन्मिथुनान्यन्यत्राजाभ्यः १७ तेन क इदमित्युपरिष्टाज्जपः १८ तत्रोहापादीनि त्वा देवि दक्षिणेऽद इति च यत्तत्स्यात् तेन दात्र इदमाविशैतत्त इति च भुञ्जतीति च भूयाद्धिꣳसीरिति च १९ अश्वरथञ्चेद्दद्यात् पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाश्वमुखानि संमृज्याद्द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्या-

श्वोऽसीत्येतत्प्रभृतिभिरुदक्सꣳस्थमिति धानञ्जय्यः २० धुर्य्यौ प्रथम-मित्यपरम् २१ दक्षिणं पूर्वम् २२ तथा प्रष्टी २३ सर्वाण्येकैकस्मिन् उदक्सꣳस्थमिति शाण्डिल्यः २४ सवाण्येकस्मिꣳस्तूष्णीमितरा-णीत्यपरम् २५ एतान्येवाश्वाश्वतरेष्वश्वतरीषु च यथार्थमूहेत् २६ त्रिभिश्चेदर्द्धान्येकस्मिन्नर्द्धानि द्वयोर्द्वैधन्द्वयोः २७

इति द्वितीयस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

आदित्यानामिति रथशिर आलभ्य जपेत् १ यद्रथ्यꣳ स्याद्वायोरिति चर्मण्यं प्रतिगृह्णीयात् २ नक्षत्राणामित्यस्थिमयम् ३ सूर्य्यस्येत्ययो लोहे ४ हिरण्यञ्च ५ दक्षिणेन रथं गत्वा रथन्तरमसीति दक्षिणं चक्रमालभेत् ६ वामदेव्यमसीत्यधिष्ठानम् ७ बृहदसीत्युत्तरं चक्रम् ८ अङ्कान्यङ्क इति चक्रे एव संमृज्यात् ९ वैश्वानर इति दक्षिणेन प्रादेनारोहेत् १० आरुह्य जपेद्विदैषत इति ११ कृशेति सव्यानभी-शूनायछेत् १२ दासेति दक्षिणानवगृह्णीयात् १३ अवरुह्य सकृ-द्वारुणमुक्त्वा यथादेवतमादिश्योपरिष्टाज्जपं जपेदिति गौतमः १४ संमार्जनप्रभृत्येतत् सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथाय चेति धानञ्जय्यः १५ ग्लायेच्चेद् यथासनं वैतत् सर्वं जपेत् १६ पृष्ठयञ्चेद्दद्यात् प्राग्वारुणादश्वनामानि जपेत् १७ पुरस्ताज्जपाद्वा १८ तथादान्तेषु १९ यद्रथ्यं स्यात्तेन तत् प्रतिगृह्णीयात् २० अन्नस्येति प्राग्वारुणादवेः २१ पुरस्ताज्जपाद्वा २२ ग्रात्वा-ऽकृन्तन्निति वसनस्य २३ तदुदस्येदतान्तवे २४ हिरण्यमल्पीयो भोगादागच्छेदौदुम्बर्य्यामाश्लेषयेत् २५ आग्नीध्रीये वा जुहुयात् २६ समस्तान् ब्रीहियवानेकक्रतौ प्रतिगृह्णीयात् २७ तथा तिलमाषान् २८ प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात् १९ तूष्णीमयज्ञे दक्षिणा इति धानञ्जय्यः ३० भूर्भुवः स्वरिति गौतमः ३१ ओमिति वोमिति वा ३२

इति द्वितीयस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

पूर्वं नाराशंसम्भक्षयित्वाहवनीये प्रस्तोता पृष्ठहोमं जुहुयाद्यत्पृष्ठꣳ स्यात्तदादिश्यादः पिबतु सोम्यं मध्वायुर्द्धद्यज्ञपतावविह्रुतमिमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहेति पूर्वाम् १ स्वाहाकारेणोत्तराम् २ द्वैधं जुहुयादिति धानञ्जय्योऽदः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतं स्वाहेति पूर्वामिमं यज्ञमित्युत्तराम् ३ होतृकपृष्ठेभ्य इति ४ रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमो महाव्रतमिति व्रते ५ रेवत्यश्च वारवन्तीयञ्चेति धानञ्जय्यो यावन्ति पृष्ठस्थानि स्युः सर्वाण्येव प्रसञ्चक्षीत पिबतु दधदिति च यथार्थमूहेत् ६ बृहता रथन्तरेण वा स्तोष्यमाणः प्राक् स्तोमयोगाद्दश व्याहृतीर्मनसा ध्यायेदैरमिति ७ रथन्तर एवर्चं यस्ते गोष्विति ८ युक्त्वा स्तोममेतद् ब्रूयादिति शाण्डिल्य ऋचं पूर्व्यं व्याहृतिभ्य इति ९ इतरं धानञ्जय्यम् १० रथन्तरे प्रस्तूयमाने सर्वत्र सम्मीलेत् ११ एकैकं मनसाक्षरं स्तोभैर्वाचा संयुञ्ज्यात् प्रथमस्वरैरकारैर्भकारादिभिरक्रान्तैर्द्वितीयस्वरोत्तमैः १२ एतद्यथाधीतमित्याचक्षते १३ प्राक् प्रतिहाराच्चतुक्षरꣳशिष्ट्वा तत्सर्वत्र प्रतिवीक्षेत १४ स्तुत्वा वरञ्चोदयेत् १५ तस्यापृष्ठस्य सतो निवर्त्तेरन्धर्माः १६ सहस्तोभैरिति गौतमः १७ स्तोभा एवान्वियुरिति धानञ्जय्यः १८ अग्निष्टोमसामसन्धिसाम्नोरेवापृष्टं स्तोभेदिति शाण्डिल्यः १९ सर्वत्रास्वस्तोत्रीयं स्तोभेदिति स्थविरो गौतमः २०

इति द्वितीयस्य नवमी कण्डिका

## अथ दशमी कण्डिका

वामदेव्येन स्तोष्यमाणः प्राक् स्तोमयोगाद्गावो अश्वा अजावयो व्रीहयो यवा इति मनसा ध्यायेत् १ ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत २ तथेतर उद्गायन् ३ आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डन्त्रीꣳस्त्रीन्वापरया द्वारा हविर्द्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्युर्यदासन्नः स्यादत्र पितरो मादयध्वं

यथा भागमावृषायध्वमिति ४ तमाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितरो यथाभागमावृषायिषतेति ५ सोम्यमाहृतमुद्गातावेक्षेतायुर्मे प्राण इति ६ पुनरस्मासु दध्मसीत्यन्तः ७ तं दशमेऽहन्यभ्यस्येयुः ८ यन्मे यममित्येके ९ पूर्वेण त्वेवावेक्षेत १० तस्मिन्नङ्गुष्ठानामिके अवधायाक्षिणी विमार्जीत येना ह्याजिमिति ११ एवमितरौ कुर्याताम् १२ प्रतिहर्त्ता पश्चात् १३ तमुत्तरेण प्रतिहर्त्तारं हरेयुः १४ यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत १५ निधनं प्रति पत्नी दक्षिणमूरुमभिषिञ्चेत् १६ तृतीयायां स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत् १७ उत्तमायां स्तोत्रीयायां भुवद्वाजायि भुवद्वाजेष्वित्यभ्यस्येन्नामिति च निधनमनुष्टुभमुत्तमामक्षरेणान्तत इति ह्याहेति १८ अनभ्यासन्त्वाचार्य्या निधनञ्च यथाम्नायꣳ शाण्डिल्यः १९ तद्यदानुशꣳसन् होतापोहिष्ठीया ब्रूयात्तदैनमन्वालभेरन्नपावृण्वानाः २० अन्यस्थानगतस्य निवर्त्तेरन् धर्माः २१ यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः २२ अहिङ्कारे तु प्रतिहारवेलायां पत्नीमुद्गातेक्षेत २३ अनुब्राह्मणमार्चिकान् सन्नामान् सर्वत्र कुर्यादप्यन्यस्मिन् साम्नि २४

इति द्वितीयस्य दशमी कण्डिका

## अथ एकादशी कण्डिका

तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुर्ऋतस्य त्वेति १ दक्षिणैः पाणिभिः कुशाः संलोभयेयुः २ यजमानवाचनादनन्तरमत्र वा यजमानं वाचयेत्तन्तवेमा ज्योतिषेत्यसावनु मा तनुहि ज्योतिषेति यथाज्येष्ठं पुत्राणां नामानि गृह्णीयात् ३ जनिष्यमाणा इत्यजातेषु ४ जातेष्वजातेषु च पुत्रा इत्येव सत्रेषु ५ वषट्कृते हारियोजनस्य यथेतमपरया द्वारा निष्क्रामन्तो जपेयुः सोमेहीति ६ सुभूरसीत्यादित्यमुपतिष्ठेरन् ७ अस्तमितश्चेद्गार्हपत्यम् ८ आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमिति पूर्वां स्वाहाकारेणोत्तराम् ९ हारियोजन्यो नाम धाना द्रोणकलशे भवन्ति तासामुद्गाता प्रथम आददानः समुपहूता भक्षयिष्याम इति ब्रूयात् १० तथेतरौ ११

उन्नेतर्युपहवमिष्ट्वा हारियोजनस्य त इति तिरोह्नयस्येत्यतिरात्रे यथाधीतं वा सर्वत्र द्विरुपघ्राय पश्चादाहवनीयस्यान्तःपरिधि निवपेयुः १२ अनुप्रहृतेषु भस्मान्ते १३ अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीये प्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैः १४ सकृदेव सर्वाण्युत्त-मेनेति शौचिवृक्षिः १५ अप्सुषोमा नाम चमसाश्चात्वालदेशेऽद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्ति १६ तं स्वं चमसं पर्युपविश्याप्सु धौतेत्यवमृश्य जपेयुः १७ मधुमन्तमिति पाणीनुप-जिघ्रेरन् १८ शमह्य इत्युदञ्चञ्चमसं निनयेयुः १९ कामेत्यभ्या-त्ममावर्त्तयेयुः २० ऊर्गित्युरःसु पाणीन्निदधीरन् २१ प्राण सोमेति मुख्यान् प्राणानभिमृशेरन् २२ आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्ण इति २३

इति द्वितीयस्य एकादशी कण्डिका

## अथ द्वादशी कण्डिका

अग्निष्टपतीत्यवभृथसाम १ तस्यावृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः २ सर्व ऋत्विजो निधनमुपेयुः ३ इष्टाहोत्रीयमभिषेचनीये ४ समस्येति वा ५ अश्वत्रिरात्रे नानावभृथान्यहानि ६ तेषां प्रथमस्य सनादग्न इत्यवभृथसाम ७ यद्वा उ विश्पतिरिति द्वितीयस्य त्यग्नायिरिति वा ८ अवभृथेष्टौ संस्थितायामवभृथ निचुंपुण निचेरुरसि निचुंपुणा-वदेवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देवरिषस्पा-हीत्यप उपस्पृश्य त्रिरभ्युक्षेरन् ९ आदित्यमुपतिष्ठेरन्नुद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरं स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तममिति १० अस्तमितश्चेदाहवनीयम् ११ तस्मिन् समिध आदध्युरेधोस्येधिषीमहीति प्रथमाँ समिदसि समेधिषीमहीति द्वितीयां यदेनश्चकृमा वयं यद्वान्यकृतमारिमानया समिधा वयँ सर्वन्तदपमृज्य ह इति तृतीयाम् १२ तमेवोपतिष्ठेरन्नपो अद्यान्वचारिषं रसेन समगन्महि पयस्वानग्न आगमन्तं मा सँसृज वर्चसेति १३ प्रागुदयनीयादतिरात्रादप्सुषोमान्तमहः सत्रेषु १४ दधिभक्षान्तमहीनेषु

१५ यावन्त्यहानि राजानं भक्षयेयुस्तावत्स्वब्राह्मणायोच्छिष्टं न दद्युर-
द्भिर्वा प्रोक्ष्य दद्युः १६ तदेष श्लोकः सोममेतत् पिवत यत्
किञ्चाश्नीत ब्राह्मणा माब्राह्मणायोच्छिष्टं दात मा पात्सोममसोमप इति
१७ एतं परिक्रमꣳ सर्वक्रतुषु विद्यात्सर्वक्रतुषु विद्यात् १८

इति द्वितीयस्य द्वादशी कण्डिका

इति द्वितीयः प्रपाठकः समाप्तः

## तृतीयः प्रपाठकः

### अथ प्रथमा कण्डिका

षोडशिसाम्ना स्तोष्यमाणो यथासनमुपविश्य हविर्द्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य इति १ एवमेव प्रातःसवने २ यदि चोत्तरयोरपि गृह्णीयुः ३ अश्वः कृष्णः पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानञ्जय्यः ४ अपरस्यां प्राङ्मुख इति शाण्डिल्यः ५ कृष्णाभावे श्यावः ६ तदभावे यः कश्चाश्वः ७ गौर्वाजोवाश्वाभावे ८ योयः सामाङ्गं ब्रूयात्स हिरण्यं धारयेत् ९ उद्गाता निधनमुपयत्सु १० सर्वे वाभिमृशेयुः ११ अवसर्पति प्रथमं पर्यायं गायेच्छन्नम् १२ विषिते द्वितीयम्मध्येन १३ अस्तमिते तृतीयमाविः १४ यदोपाकुर्यु स्तुवीरन्नेव १५ अहनि छन्नं रात्रावाविः १६ उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु १७ सत्र एव ग्रहस्य भक्षयेयुरैन्द्रꣳसह इत्युदस्य हरिवदहरिकासु चेत् स्तुवीरन् १८ अनुष्टुप्छन्दसा चमसस्य १९ पूर्वेण वा २० तथा कुर्वन्निन्द्रश्च सम्राड्वरुणस्य राजा तौ ते भक्ष्यं चक्रतुरग्र एतं तयोरहमनुभक्ष्यं भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति ग्रहस्य २१ इन्द्रमिद्धेति वा वाग्देवी सोमस्य पिबत्वि-त्येतदधिकया २२ ऐन्द्रꣳ सह इति चमसस्यासत्रे त्रिष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति गौतमः २३ अनुष्टुप्छन्दसेति धानञ्जय्य-शाण्डिल्यौ २४ अनुष्टुपछन्दसा रात्रौ २५ पृथक्तृचेभ्यः सन्धौ हिं कुर्युः २६ इष्टयजुष इति भक्षः २७ गायत्रछन्दसातिरिक्तस्तोत्रेष्विति गौतमः २८ पृथग्भक्षछन्दोभिरनुपूर्वमिति धानञ्जय्यशाण्डिल्यौ २९

अनुष्टुप्छन्दसा वा ३० अछन्दसा वा ३१ सन्धिवद्धा ३२
इति तृतीयस्य प्रथमा कण्डिका

अथ द्वितीया कण्डिका

आहिताग्निरसोमयाजी परꣳ सोमेन याजयित्वा परिभक्षं कुर्वीत १ सोमयाज्यपीति शाण्डिल्यः २ हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् ३ कꣳसे चमसे वा द्रप्सानवधाय दक्षिणाग्रावपसादयेत् ४ स्फ्यदर्भमुष्टी च ५ पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयाद्यावद्गृहीती स्यात् ६ तज्जुहुयादिमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरमापिः पिता प्रमतिः सोम्यानां भ्रिमिरस्पृषि कृन्मर्त्यानाꣳ स्वाहेति ७ एवमेव गृहीत्वापां पुष्पमस्त्योषधीनाꣳ रसोग्नेः प्रियतमा तनूरिन्द्रस्य प्रियतमꣳ हविः स्वाहेति ८ आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति ९ दधिशेषꣳ स्रुच्यानीयोदङ्ङावृत्य प्राश्नीयात्तव सोम व्रते वयं मनस्तनूषु पिप्रतः प्रजावन्तो अशीमहीति १० प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीती भूत्वा दक्षिणा दक्षिणाग्नेः स्थण्डिलꣳ समुद्याद्भिः सम्प्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीयामीषां द्रप्सानान्निपृणुयादवमेभ्यः पितृभ्यः स्वधा सह भक्षेभ्य इति प्रथमम् ११ और्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक् १२ अत्र पितरो मादयध्वं यथाभागमित्युक्त्वोदङ्ङावर्त्तेतासित्वा यावन्मन्येत तावदभिपर्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमनन्तरिताः पितरः सोमपीथादिति १३ तान्दर्भान्द्रप्साꣳश्च दक्षिणाग्नौ प्रहरेत् १४
इति तृतीयस्य द्वितीया कण्डिका

अथ तृतीया कण्डिका

यज्ञोपवीती भूत्वाप उपस्पृश्य गृहान् व्रजञ्जपेद्गृहा मा बिभीत मा वेपिढ्वमूर्जं बिभ्रत एवमस्यूर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानेमि

मनसा दैवेन येषामध्येति प्रवसन्नेषु सौमनसो बहुर्गृहानुपहूयामहे ते नो जानन्तु जानतः उपहूता इह गाव उपहूता अजावयोऽथो अन्नस्य यो रस उपहूतो गृहेषु न इति १ पश्चाच्छालाग्नेरुपविश्य जपेदिह गावः प्रजायध्वमिहाश्वा इह पुरुषा इहो सहस्रदक्षिणोऽपि पूषा निषीदत्विति २ अग्नेस्तृणानि प्रत्युह्य यः सुहृत्तमभिभाषेत ३ गोषु गा अपिसृजे- दुपेदमुपपर्चनमासु गोषूपपृच्यतामुपर्षभस्य रेतस्युपेन्द्र तव वीर्य्य इति ४ सत्रेषु सर्वानध्वर्युर्दीक्षयेत् ५ दीक्षिष्यमाणान्दर्शयेत् स्वस्त्या- त्रेयमरुन्धतीं ध्रुवमुदपात्रं य एषोऽक्षिणि पुरुषो दृश्यते ६ नैतानि परासुः पश्यतीति ७ तान्न दीक्षयेत् ८ दीक्षिष्यमाणाः संवदेरन् सह नः साधुकृत्या नाना पापकृत्या यास्मिन्सत्रे ९ अथ यत्पुरा चकृम कर्त्तास्मश्च यथोपस्थितमेव नस्तदिति १० तेषां दीक्षाप्रभृति पत्नी- शालायां भोजनसंवेशने स्याताम् ११ उपवसथ्यप्रभृत्याग्नीध्रीये १२ सन्धिबेलयोर्वाचं यच्छेयुः १३ विचक्षणान्तां वाचं भाषेरन् १४ न कञ्चनाभिवादयेरन् १५ न शूद्रेण सम्भाषेरन् १६ नाधिष्णय उत्तपेरन् १७ न प्रतीच्या द्वारा पत्नीशालाया निष्क्रामेयुः १८ प्राञ्चमुदञ्चं वोच्चारं कुर्वीरन् १९ न बहु वदेयुः २० न दन्तान् दर्शयेरन् २१ नाहुतस्या- श्नीयुः २२ नैनानन्यो अतः पश्येत् २३ सर्वेषां सवनानां प्राश्नीयुः २४ क्रोधानृते वर्जयेयुः २५ एतानि व्रतानि दीक्षासु २६ दीक्षोपसत्सु वा २७ आ वा सत्रान्तात् २८ उदयास्तमयावभ्याश्रावणञ्च बहिर्वेदि प्रसृते वर्जयेयुः २९

इति तृतीयस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

तेषाञ्चेदेनाँस्त्रयाणां किञ्चिदेयाद्गृहपतावुपहवमिच्छेरन् १ तञ्चेदु- द्गातरि २ दीक्षानुपूर्व्येण वा सर्वेषाम् ३ परिहृतासु वसतीवरीषु संविशेयुः ४ तेषाञ्चेत् कश्चित् प्रेयादतीर्थेन निर्हृत्याहार्येणानाहिताग्निं दहेयुः ५ अरण्योरग्नीन्समारोप्य ते आप्नानेन निर्हृत्य निर्मन्थ्येना- हिताग्निम् ६ मध्यमस्य रात्रिपर्य्यायस्य दैवोदासं होतृषाम स्यादौ-

र्ध्वसद्मनं वा ७ अभिप्लवस्य द्वितीयेऽहनि भर्गो यश इति प्राग्विषुवतो व्यत्यासं स्यातामिति गौतमः ८ ऊर्द्ध्वञ्च त्रिष्वभिप्लवेषु ९ यशो भर्ग इति परेषु १० सकृद्द्विर्वा यशः पुरस्तात्तथोपरिष्टाद्भर्ग इतरेष्वित्यपरम् ११ भर्गः पूर्वस्मिन् पञ्चसि यश उत्तरस्मिन्नित्यपरम् १२ एताभ्यामुक्ते वीङ्कशुद्धाशुद्धीये १३ विषुवत ऊर्द्ध्वं वीङ्कमेव स्यादिति धानञ्जय्यः १४ पञ्चमे यदहर्ग्रामे गेयꣳ सन्ततिः स्यान्मानवात्पूर्वञ्चाम्नꣳ स्यात् १५ इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये षष्ठे १६ पूर्वस्मिन् पञ्चसि त्रिषु चतुर्थोऽभिप्लवो लुप्येत १७ एत एवावृत्ता ऊर्द्ध्वं विषुवतोऽभिप्लवाः १८ तेषां प्रतिलोममहान्युपेयुः १९ पृष्ठ्यस्वरसाम्नाञ्च २० दशरात्रसमीपे त्रिषु चतुर्णामावृत्तानां प्रथमो लुप्येतेति धानञ्जय्य उत्तम इषोवृधीयसमन्ते स्यातामिति २१ विपरीतमेतच्छाण्डिल्यायनस्य २२ विषुवत्समीपे च २३ त्रिष्वभाव इषोवृधीयसमन्तयोः २४ भावस्त्वाचार्य्याणां भावस्त्वाचार्य्याणाम् २५

इति तृतीयस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

पृष्ठ्ये रथमतिवहेयुः पश्चात् प्राञ्चं दक्षिणतो वोदञ्चं बहिर्वेदि रथन्तरस्य स्तोत्रे १ बृहतो दुन्दुभिमाहन्युः २ उपवाजयमाना वैरूपेण स्तुवीरन्नुपवाज्यमाना वा ३ वाचयित्वा यजमानं स्तुतमसीत्यनेन वात आ वात्विति तृचेनानुमन्त्रयेत् ४ वैराजस्य स्तोत्र उपाकृत उपर्य्यनूरुसकलं निधाय तृणे च तस्योपरि तिरश्चीमरणिं निधायाभ्यात्मं प्रजननं कृत्वा त्रिः प्रदक्षिणमभिमन्थेद्गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतमः ५ चतुर्भिरिति धानञ्जय्यः ६ त्रिभिरिति शाण्डिल्यः ७ अरण्योः सन्धानमालभ्योपजिघ्रेत् तेजोऽसि तेजो मयि धेहीति ८ मथ्यमाने स्तोमं युञ्ज्यात् ९ जाते स्तुवीरन् १० वाचयित्वा यजमानं पुनरूर्जा निवर्त्तस्व पुनरग्न इषायुषा पुनर्नः पाह्यꣳहसः सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया विश्वप्स्या

विश्वतस्परीत्यनुमन्त्र्याभिजुहुयात्तदुक्तं ब्राह्मणेन ११ स्वाहाकारेणोत्तराम् १२ अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन् १३ यो यः सामाङ्गं ब्रूयात्स उदघोषं जनयेत् १४ वाचयित्वा यजमानं ता निनयेदास्तावेऽनाधृष्टासि तान्त्वा सोमो राजा वनुयाम पीता उपतिष्ठन्त आपो ये शाक्करा ऋषभा ये स्वराजस्ते अर्षन्तु ते वर्षन्तु ते कृणवन्त्विषमूर्जꣳ रायस्पोषन्तद्विदेयेति १५ समन्या यन्तीति वा १६ समुद्रं वः प्रहिणोमीति वा १७ सर्वैर्व्वा १८ अष्ठीवतोरवका उपोहेरन् १९ छदिषि वर्षकामोऽध्यासयेदिति शाण्डिल्यः २० गोष्ठे पशुकामः २१ सभायां यशस्कामः २२ श्मशानेऽभिचरन् २३

इति तृतीयस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

वारवन्तीयस्य स्तोत्रे धेनुः संवाशयेयुर्दक्षिणतः कृत्वोत्तरतो वत्सान् १ पूर्वेण सदः संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीरत्यजेयुः २ वाचयित्वा यजमानं गोनामभिरनुमन्त्रयेत हव्ये काम्ये चन्द्रे ज्योत इडे रन्ते जुष्टे सूनरि मयि वो रायः श्रयन्तामिड एह्यदित एहि जुष्टे जुष्टिन्ते गमेयमुपहूता उपहवं वोशीयेति ३ सहर्षभा इति वा ४ उभाभ्यां वा ५ अद्भिश्चेदुपाकुर्युस्ता निनयेदास्तावे आपोहिष्ठीयाभिः ६ षष्ठेऽहनि सꣳस्थितेऽबहुवादिनः स्युर्न्न चाधीयीरन्नोत्तरस्याह्न उपाकरणात् ७ सर्पिर्मधुभ्यामृत्विजो भोजयेदहीनेषु ८ अन्यतरेण वा ९ सर्पिषैव तृतीयसवने सत्रेषु १० एतस्यान्यतरस्मिꣳस्त्र्यहेऽतिग्राह्याणां भक्षयेयुः स्तुत्वा पृष्ठेन ११ विषुवद्व्रतयोश्च १२ त्रिष्टुप्छन्दसा १३ पूर्वं चमसेभ्यः १४ अन्यत्र चैतस्मिन् काले यानाहरेयुः १५ सह धर्मैः सर्वत्र पृष्ठ्यः स्यात् १६ दशमव्रते च १७ आमीवर्त्तस्तोत्रीयानाभिप्लविकान् पृष्ठ्ये शंसयेद्ब्राह्मणाछंसिना कालेयर्चोऽच्छावाकेन सर्व्वत्र यदा पवमाने स्याताम् १८ सर्वत्रेन्द्रक्रतुं ब्राह्मणाछꣳसिनोद्धर्वं विषुवतः प्रागतिरात्रात् १९ विश्वजिति वैराजे धर्म्मान् कुर्यात् २० इतरेष्वपि पृष्ठेष्वित्याचार्य्यमतिः २१ सप्तमेऽहन्यग्नेर-

र्कोऽध्यर्द्धेडश्च सोमसाम मौक्षस्य पूर्वयोः २२ मोक्षसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कस्तिसृष्विति वा २३ साकमश्वेडानां संक्षारौ व्यतिहरन्त्येके २४ सुरूपक्रौञ्चे एकर्चयोरेके २५ नवमस्य ज्योतिष्टोमः पर्यासः २६ साप्तमिक इत्येके २७ तस्य बृहत्यामरण्ये गेयानि तृचेषु पृष्ठ्यञ्च २८ वासिष्ठमध्यास्यायाम् २९ वैयश्वं प्राग्भर्गादाभीशवं यशसः ३० सप्तैव तृचेषु यैरजामीत्यपरम् ३१ दीर्घतमसोऽर्कोऽन्त्यः सामराजं वा ३२ पृष्ठस्योत्तरयोर्दीर्घतमसोऽर्को माण्डवश्वैडᳺ सामराजेऽन्त्ये ३३

इति तृतीयस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

दशमस्य बहिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः प्रथमाच्च बहिष्पवमानं तन्नवर्चम् १ अनुरूपेषु तृचाः प्रतिलोमा ऋचो नवर्च इति गौतमः २ सर्वत्र तृचा इति धानञ्जय्यः ३ यथाधीतं नवर्चमिति शाण्डिल्यायनः ४ सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्यः ५ अप्रतिभामेतस्मिन्नहन्यनुष्टुम्मात्रां कृत्वाचक्षीरन् ६ ज्यायसि छन्दसि लुम्पेयुरक्षराणि कनीयस्यभ्यस्येयुः ७ अग्निष्टोमसाम्ना स्तुत्वा प्राक् पत्नीसंयाजेभ्यो यदेभिः प्रस्तुते पराध्र्यं व्रजितᳺ स्यात्तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयादुपसृजन्धरुणं मात्रे मातरं धरुणो धयन् रायष्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति पूर्वम् ८ स्वाहाकारेणोत्तराम् ९ आहवनीयं गत्वा पश्चात्तिष्ठन्तोऽयं सहोहा इति त्रिरुद्गाता गायेत् निधनमितरावनूपेयाताम् १० यजमानसञ्चरेण गत्वा पूर्वया द्वारा सदः प्रविशेयुः ११

इति तृतीयस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

यदा अध्वर्युरुपाकुर्य्यादथ मानसेन स्तुवीरन्नायं गौः पृश्निरक्रमीदिति गायत्रेण पृथक् स्तोत्रीयाभ्यो हिंकारं त्रिकेन स्तोमेनास्तोमयोगा

यजमानवाचनेन १ प्रतिहारबेलायां प्रतिहर्त्तापान्यात् २ उत्तमां प्रस्तुत्यैषेति होतारमीक्षेत ३ सर्वमेतस्मिन् स्तोत्रे मनसा कुर्युः ४ समीक्षणेन विज्ञापयन्तः ५ यमध्वर्युर्भक्षं प्रयच्छन् मन्येत तस्य मनसोपहूय कस्त्वा कं भक्षयामीति भक्षयेयुः ६ ब्रह्मोद्यं वदन्तीति गायत्रीं त्रिर्ब्रूयुरिति धानञ्जय्यः ७ चतुर्होतारमभिप्रेत्यैतदिति गौतमः ८ यथाश्वत्रिरात्र इति शाण्डिल्यः ९ एतस्यां वेलायां वरान् वृणीरन् मनसा यानिच्छेयुः १० उत्तरत उद्गातौदुम्बरीं गृह्णीयात् पश्चात् प्रतिहर्त्ता दक्षिणतो ब्रह्मा पुरस्तादितरे सर्वे ११ अथ जपेयुरिह धृतिरिह स्वधृतिरिह रन्तिरिह रमध्वं मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमध्वमिति वा १२ उभौ वा १३ वाग्यता अपिधाय द्वारे आसीरन्ना नक्षत्रप्रवचनात् १४ प्रोक्ते नक्षत्रे पूर्वया द्वारा निष्क्रम्य सुब्रह्मण्या-प्रणवैर्वाचं विसृजेरन्निति धानञ्जय्यः १५ श्रुत्वैवाहूयमानाय इति शाण्डिल्यः १६ वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु १७ कृत्वेतरे यथार्थं कृत्वेतरे यथार्थम् १८

इति तृतीयस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

महाव्रतस्य पृष्ठ्य उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति भाण्डितायनः १ प्रतिगृह्य तृणे अयुक्त्वेति गौतमशाण्डिल्यौ धानञ्जय्यश्च २ प्रागेव स्तोत्रोपाकरणादित्येके ३ दक्षिणेनाग्नीध्रीयं गत्वोत्तरेणाग्निं प्राणप्रभृतिभिरुपतिष्ठेरꣳस्तदुक्तं ब्राह्मणेन ४ सर्वा-ण्युद्गाता सकृत्सकृद्गायेत् ५ निधनमितरावनूपेयाताम् ६ अपि मध्ये निधनेषु ७ आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् ८ तेनैव प्रत्याव्रज्य पुच्छम् ९ व्रतपक्षयोः पूर्वेण दक्षिणं पक्षम् १० उत्तरमपिकक्षमुप-तिष्ठेरन् ११ विश्वेदेवा इति वसिष्ठनिहवमूहेत् १२ चात्वालमुपस्था-योत्तरेणाग्नीध्रीयं गत्वापश्चात्तिष्ठन्तः १३ तत एव प्रत्यङ्मुखा इति धानञ्जय्यः १४ तस्योत्तमं निधनमा तमितोरुपेयुः १५ पूर्वेण हविर्द्धाने पुरस्तात् प्रत्यङ्मुखाः १६ पश्चादितरेण १७ तत एवेक्षमाणा मार्जालीयं

यत् द्वन्द्वेषु नाके सुपर्णमिति १८ यथा हविर्द्धाने तथा सदः १९ अन्तर्वेदेः प्रत्यङ्मुखा गार्हपत्यमिति धानञ्जय्यः २० तस्यैव पश्चात्तिष्ठन्त इति शाण्डिल्यः २१ इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः २२

इति तृतीयस्य नवमी कण्डिका

## अथ दशमी कण्डिका

अथ राजानꣳ सन्नाहयेत् १ तस्य द्व्यवराद्ध्यौ रथावनुयायिनौ स्याताम् २ पूर्वेण देवयजनꣳ सन्नह्येरन्नन्ये तस्मात् ३ दक्षिणेन परियायुः ४ पूर्वेण पत्नीशालामुद्गाता गत्वा दक्षिणे वेद्यन्ते प्राञ्चो दर्भानास्तीर्य्य तेष्वेनं प्राङ्मुखमुपवेशयेत् ५ अथास्मै वर्म्माभिहरेदन्यं वाभिहरन्तमनुमन्त्रयेत उत्तिष्ठ राजन् परिवर्म्मास्यश्च युक्तो रथो विततो दैव आखणोविशां राजा ब्राह्मण एधि गोप्तेति ६ पश्चिमेन परियाहीत्युक्त्वा तेनैव प्रत्याव्रज्योत्तर एनं वेद्यन्तेऽवस्थाप्य ब्रूयाद् हस्तत्रं बध्नीष्वोज्यमायुधं कुरुष्व त्रीनिषूनुपकल्पयस्वायस्मायान्यमेव कक्ष चतुर्थमिति ७ प्रतिधत्स्वेति ब्रूयात् ८ तं प्रतिदधानमनुमन्त्रयेत वैणावताय प्रतिधत्स्व शंकुमापप्रोऽष्टमो तेति पप्रद्ब्रह्मणो गुप्त्यै-विधृत्यै धारयात्रेति ९ संहत्यातिष्ठेति ब्रूयात् १० दक्षिणेन रथपथं कृत्वोत्तरेणाग्नीध्रीयं पूर्वापरे चर्मणी विबध्नीयुः ११ तं ब्रूयात् प्रदक्षिणं देवयजनं परीयात् पूर्वञ्चर्मागमनेषु विध्येरेकैकेनोत्तरोत्तर्यनतिपातयन् १२ अपरस्मा इतरे यथाभिप्रेतमस्येयुः १३ तृतीयेन विद्ध्वोदङ् प्रयायाः १४ तदा चतुर्थमिषुं यान्दिशं मन्येथास्तामस्येर्गा दृष्ट्वाव-तिष्ठेथाः १५ तत्र त्वा विस्त्रंसयेयुः १६ ब्राह्मणमुक्त्वेमम् १७ हिङ्कारवेलायां कारयेरिति १८ भूमिदुन्दुभिमाव्रजेत् १९

इति तृतीयस्य दशमी कण्डिका

## अथ एकादशी कण्डिका

पश्चादाग्नीध्रीयस्यार्द्धमन्तर्वेदि श्वभ्रस्य खातꣳ स्यादर्द्धं बहिर्वेदि १ आर्षभेणोत्तरलोम्ना चर्मणाभिविहितं स्यात् २ त्वं वागसि ये नः सत्रे

अनिन्दिषुर्दीक्षायाᳩ श्रान्त आसिते राद्धिन्तेभ्यो दुन्दुभे राद्धिमस्मभ्य-मावदेति परावद द्विषन्तं घोरां वाचं परावदाथास्मभ्यᳩ सुमित्रियां वाचं दुन्दुभे कल्याणीं कीर्त्तिमावदेति परावद द्विषतो वाद्यन्दुर्हार्दो ये विषूकुहोथास्मभ्यं पुष्टिं राद्धिᳩश्रियमावद दुन्दुभ इत्येनमेतैः पृथगाहत्य बालधानेनान्यं बाघ्नन्तमनुमन्त्र्याप उपस्पृश्य पश्चा-त्तिष्ठन्तोऽग्निमुपतिष्ठेरन् नमस्ते गायत्राय यत्ते पुरो यत्ते शिरो नमस्ते रथन्तराय यत्ते दक्षिणतो यत्ते दक्षिणः पक्षो नमस्ते बृहते यत्ते उत्तरतो यत्ते उत्तरः पक्षो नमस्ते यज्ञायज्ञीयाय यत्ते पश्चाद्यत्ते पुच्छं नमस्ते वामदेव्याय यत्ते आत्मा यत्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् ३ अथ समस्तेन तस्मैते सुभोः सुभवो भूयास्म नामासि नाम भूयासमाविरस्याविर्म्मा कुरु सवितः प्रमासुवयां मनुष्याणां भूतौ सम्पश्यसि तेष्वभिभूयासᳩश्रियं मयि धेहीति ४ उपस्थाय सदः प्रविशेयुः ५

इति तृतीयस्य एकादशी कण्डिका

## अथ द्वादशी कण्डिका

अपरया द्वारौदुम्बरीमासन्दीं मौञ्जविवानाम् अतिहरेयुः १ यज्ञियस्य वृक्षस्यौदुम्बराभावे २ मुञ्जाभावे दार्भम् ३ प्रादेशमात्राः पादा अरत्निमात्राणीतराण्यङ्गानि ४ दक्षिणेनौदुम्बरीᳩ हृत्वा तस्या उत्तरतो निदध्युः ५ तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पृशोऽस्याः पादान्कृत्वा कूर्चावधस्तादुपोह्याभिमृशेद्बृहद्रथन्तरे ते पूर्वौ पादौ श्यैतनौधसे अपरौ वैरूपवैराजे अनूची शाक्वररैवतेतिरश्ची इत्येतैः पृथगङ्गान्यन्वर्थम् ६ विवयनमालभ्यर्चः प्राञ्च आताना यजूᳩषि तिर्यञ्चः सामान्यास्तारणᳩ श्रीरुपबर्हणं वाकोवाक्यमतीरोका वार-वन्तीयᳩ सन्धयो राजनमात्मा प्रतिष्ठा यज्ञायज्ञीयमिति ७ तां मुखे-नोरसा बाहुभ्यामिति स्पृष्ट्वारोहेत् वसवस्त्वा गायत्रेण छन्दसा रोहन्तु तानन्वधिरोहामि राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा रोहन्तु तानन्वधिरोहामि वैराज्यायादित्यास्त्वा जागतेन छन्दसा रोहन्तु

तानन्वधिरोहामि स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन छन्दसा रोहन्तु तानन्वधिरोहामि साम्राज्यायेति ८ अथैतैरेव देवता उदस्य राज-शब्दञ्चामुना त्वा छन्दसा रोहामीत्यारोहेत् ९ वैराजपञ्चमैरिति गौतमः १० चतुर्भिरिति धानञ्जय्यः ११ त्रिभिरिति शाण्डिल्यः १२ आरुह्य जपेत्स्योनामासदꣳ सुषदामासदं नमस्तेऽस्तु मा मा हिꣳसीरिति १३ तस्मिन्नारोहति कूर्चानारोहेयुः प्रष्टी ब्रह्मा गृहपतिः १४ आसन्द्या व्याख्यातं द्रव्यं वाणस्य द्रव्यं वाणस्य १५

इति तृतीयस्य द्वादशी कण्डिका

इति तृतीयः प्रपाठकः समाप्तः

## चतुर्थः प्रपाठकः

### अथ प्रथमा कण्डिका

रोहितेनानडुहेनोत्तरलोम्ना चर्मणापिहितः स्यात् १ तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युर्मौञ्ज्यो दाभ्र्यो वा २ त्रिष्विति शाण्डिल्यश्चतुस्त्रिꣳशन्मध्यमे त्रयस्त्रिꣳशतावभित इति ३ पुरस्ता-देकैकशस्तास्त्रेधं विभज्य भूर्भुवः स्वरित्येताभिः पृथगुत्तरोत्तर्युदूहेत् ४ तमभिमृशेद्वदो वद वदा वदी वदो वदोरुः पृथुः सुगः सुगं त्वः कर्मः करणः करः करस्युरभीषाट्चाभीषाही चाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयाꣳश्च सहस्वाꣳश्च सहमानाश्चोद्वयाश्च बृहद्वयाश्च सवयाश्च बृहद्वयाश्चैन्द्रीं वाचं बृहतीं विश्वरूपाꣳ शतायुषीं प्रवद देव वाणेति ५ शिथिलाꣳस्तन्तुना यछेदेभिर्नो वाण तन्तुभिः शतं राद्धीरिहाबहारात्स्म सर्वेऽताष्र्म जीवा ज्योतिरशीमहीति ६ वाक्सर्वं मनो ज्योतिर्मा नो भद्र इति जपित्वा वादयेदिन्द्रेणतयेषीकया वेतसशाखया च सपलाशया मूलतः ७ प्राणाय त्वेत्यूद्ध्र्वमुल्लिखे-दपानाय त्वेत्यवाञ्चम् ८ व्यानाय त्वा व्यानाय त्वेति त्रिः संलिख्यो-दञ्चं प्रोहेत् ९ ब्राह्मणमुक्त्वेममुल्लिखन्नास्वेति १० आहत दुन्दुभीन् प्रवदन्तु वीणा इति ब्रूयात् ११

इति चतुर्थस्य प्रथमा कण्डिका

## अथ द्वितीया कण्डिका

अलावुवीणां वक्राकपिशीष्टर्चौ च पूर्वस्यां द्वारि बहिःसदसम् १ वक्राकपिशीष्टर्चौ दुन्दुभीᳬश्च प्रतिमन्त्रयेत या वक्रायां कपिशीष्य्यां दुन्दुभौ यच्च वाद्यं घोषो यो महतो महाᳬस्तेन नोराद्धि मावदेति २ महावीणापिशीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानञ्जय्यः ३ अलाबुवीणापि शीलवीणे च प्रतिमन्त्रयेतालाबुवीणेऽपि शीली च यं मन्त्रमधिजग्मतुस्तेनेदमुपगायतां ते साममहयेष्यत इति ४ पश्चिमेनोपगातॄन् द्वे द्वे एकैका पत्नी काण्डवीणां पिछोराञ्च व्यत्यासं वादयेत् ५ उपमुखं पिछोरां वादनेन काण्डमयीम् ६ ता अपघाटिला इत्याचक्षते ७ ताः प्रतिमन्त्रयेत यां पत्न्यपघाटिलां मृदुकं वादयिष्यति सारातिमपवाधतां द्विषन्तं तैजनित्वगिति ८ सर्वमनुवीक्षमाणो जपेदाक्रन्दा उलूलयः प्रकोशा यवाचष्टति सर्वा सत्रस्य सा राद्धिस्तथेदᳬ साम गीयत इति ९ जपेदेव सुपर्णोऽस्मि गरुत्मान् प्रेमां वाचं वदिष्यामि बहु करिष्यन्तीं बहु करिष्यन् स्वर्गमयिष्यन्तीं स्वर्गमयिष्यन् मामिमान् यजमानानिति १०

इति चतुर्थस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

ब्राह्मणोऽभिगरः पूर्वस्याᳬ सदसो द्वारि प्रत्यङ्मुख उपविशेत् १ वृषलोऽपगरोऽपरस्यां प्राङ्मुखः २ स ब्रूयान्नारात्सुरिमे सत्रिण इति ३ अरात्सरित्यभिगरः ४ दक्षिणेन मार्जालीयमर्योऽन्तर्वेदि दक्षिणामुखस्तिष्ठेत् बहिर्वेदि शूद्र उदङ्मुखः ५ अर्याभावे यः कश्चार्यो वर्णः ६ तौ श्वेतं परिमण्डलं चर्म व्यायच्छेतां ७ शूद्रः पूर्वः ८ पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेद्बहिर्वेदि पुᳬश्चली दक्षीणामुखी ९ सा ब्रूयाद्दुश्चरितिन्नवकीर्णिन्निति १० धिक्त्वा जाल्मि पुंश्चलि ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी ११ एवमातृतीयं व्यत्यासम् १२ सर्वेषां कर्मणि निष्ठिते तदेवाभिगरस्त्रिर्ब्रूयात् १३

अवसृज्य शूद्रः प्रद्रवेत् १४ तं तेनैवावक्षिणुयात् १५ यथाभिप्रेतमितरां ब्रह्मचार्य्याक्रोशेत् १६ पश्चिमेनाग्नीध्रीयं बहिर्वेदि परिश्रिते मिथुनौ सम्भवेतां यौ वर्णौ लभेरन् १७ गृहपतेर्दास्यो नवानुदहरणान्पूरयित्वा प्रदक्षिणं मार्जालीयं परीयुर्हैमहाइदं मध्विदं मध्विति वदत्यः पञ्चावराद्धर्याः पञ्चशतम्पराद्धर्याः पञ्चविंशतिः साम्प्रताः १८ सर्वासु स्रक्तिषु दुन्दुभीनाबध्नीयुः १९ उत्तरोत्तरि वाचो व्याहारयेयु-र्यावतीरधिगच्छेयुः २० घोषांश्च २१ हिंकारमन्वभिगरप्रभृतयः कृत्वा यथार्थंस्युः २२ आ स्तोत्रान्तात्कुम्भिन्यः सर्वे च घोषाः २३
इति चतुर्थस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

पञ्चविंशे चतुर्विंशस्योत्तमे पर्याये परिचरायामावपेदिति गौतमः १ आवापस्थान इति धानञ्जय्यः २ प्रथमस्यावापस्थान इति शाण्डिल्यः ३ चतुर्विंशेन वा स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् ४ स आस्कन्दो नाम ५ तन्न कुर्यादिति शाण्डिल्यायनः ६ उत्तमायां स्तोत्रीयायामस्तुतायां पादावुपावहरेत् सहनिधनेन भूमौ प्रतिष्ठापयेत् ७ आह्रियमाणे भक्षे प्रतिलोमैरारोहणीयैरवरुह्य जपेन्मही द्यौः पृथिवी च न इमं यज्ञम्मिमिक्षतां पिपृतान्नो भरीमभिरिति ८ अध आसीनाः शेषेण स्तुवीरन् ९ उदयनीयेऽतिरात्रे संस्थितेऽवभृथ-मभ्यवेयुरनुपमज्जन्तः १० पाणिभिस्तु सन्धावेरन् ११ यस्यात्र पत्नी स्यात् पृष्ठन्तया व्युद्धावयेत् १२ तानुन्नेतोदानयेत् १३ उदेत्य गृहपतिः सोमोपनहनं परिदधीत १४ वस्त्राणीतरे १५ अभुक्षणप्रमृति समाप-येयुः १६ येनेतो गच्छेयुरन्येन प्रत्याव्रजेयुः १७ अनूबन्ध्यवपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेरन् १८ तस्मिन् संस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदवसानीयाभिरिष्टिभिराहिताग्नयो यजेरन् १९ गृहपतिं यजमानमनाहिताग्नय उपासीरन् २० तद्देवत्यैः स्थाली-पाकैर्यजेरन्निति धानञ्जय्यः २१ संवत्सरं संवसेयुः २२ द्वादशरात्र-महोरात्रौ वा २३ यावद्वा सुनुयुर्यावद्वा सुनुयुः २४

इति चतुर्थस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

अथातो गवामयनविकल्पाः १ सर्वं ज्योतिष्टोमेनैके २ अतिरात्रचतुर्विंशनवाहव्रतातिरात्रा वा यथास्थानꣳ स्युः शेषो ज्योतिष्टोमेन ३ अत्र वा गोआयुषी पृष्ठ्याभिप्लवौ दशरात्रमित्युपाहरेत् स संवत्सरप्रवर्हः ४ शङ्खाहतञ्च ५ नाना होभिर्वयं कल्पयामो यथैतद्ब्राह्मणम् ६ अतिरात्रमुभयसामानं कुर्वन्नान्धीगवादुत्तरे उदलबृहती षोडशिमाꣳश्चेदौदलस्थाने नानदम् ७ पूर्वो बृहतः सामतृचः ८ चतुर्विंशमरथन्तरमेके ९ रथन्तरपृष्ठं वा बृहदनुष्टुप्कम् १० अग्निष्टोमसꣳस्थञ्चेत्त्रिꣳशान्याज्यानि षट्त्रिꣳशानि पृष्ठानि ११ षट्त्रिꣳशानि वा होतृकसामानि १२ पृष्ठानां वाष्टाचत्वारिꣳशानि १३ सर्वाणि वा त्रिꣳशानि स्तोत्राणि १४ व्यत्यासं वा त्रिणवत्रयस्त्रिꣳशौ १५ एतदन्तरुक्थ्यम् १६ अभिप्लवꣳ स्वरसाम्नश्च ज्योतिष्टोमतन्त्र एके कल्पयन्ति १७ तथा सताꣳ शाट्यायनिनः षडहविभक्तीरनुकल्पयन्ति १८ द्विविधमभिप्लवमेक उपवत्यग्रियवती च व्यत्यासम्प्रतिपदौ राथन्तरबार्हतानि चाज्यानि १९ आज्यप्रतिपदावौशनकावे अन्त्ये पार्थयामे वा बार्हतानां स्वयोन्यभीवर्त्तो रथन्तरपृष्ठेषु श्यैतर्द्धु बृहत्पृष्ठेषु २० व्यूढं पृष्ठ्यमेके २१ तस्य समूढात्प्रथमस्यान्हो बहिष्पवमानम् २२ समूढमेके रथन्तरबृहत्पृष्ठम् २३ नानापृष्ठे चोत्तरे चतुरहे रथन्तरबृहती व्यत्यासम्पवमानेषु बृहतीषु रथन्तरमनुष्टुप्सु बृहते द्वितीये २४ बृहदुत्तमꣳ समूढे २५ आष्कारणिधनात्पूर्वं कौल्मलबर्हिषम् २६ आन्धीगवाच्छ्यावाश्वम् २७ उपोत्तमꣳ समूढे २८

इति चतुर्थस्य पञ्चमी कण्डिका

अथ षष्ठी कण्डिका

आनूपोपक्रमा बृहती पञ्चमे १ मानवात्पूर्वꣳ हारायणम् २ मधुश्च्युन्निधनादाकूपारम् ३ उपोत्तमꣳ समूढे ४ बृहतः पूर्वे त्रय एकर्चाः ५ रथन्तरादुत्तरे ६ षष्ठे च बृहतो व्यूढे ७ नित्यौ च

शशकर्णौ तृतीये पृष्ठ्ये ८ अभीवर्त्तकालेये बृहतीष्वनुकल्पयेदिति गौतमः ९ नेति धानञ्जय्यः १० व्यूढं नानुकल्पयेदिति शाण्डिल्यायनः ११ एकविᳬंशत्यहकारिण उपरिष्टादभिजितः पृष्ट्यमुपयन्ति प्राक् च विश्वजितः स्वरसाम्नश्चोक्थ्यान् १२ अभिजिद्विश्वजितौ व्यतिहरन्त्येके १३ अभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपद्धोतुराज्यञ्चाभिवायुमित्यौशनं ज्योतिष्टोमं परᳬं सुज्ञानमुष्णिहि श्यावाश्वात् पूर्वे गौरीवितबृहती १४ स्वयोनिनी रथन्तरवृहती स्वरसामस्वेके १५ स्वरपृष्ठाश्चेत्स्वारसामिकेषु पृष्ठस्तोत्रीयेषु यथास्वᳬं स्वाराणि चार्भवान्त्यानि द्वैगतगौतमयोः स्थाने रथन्तरमन्तरिक्षस्य गौतमᳬं स्वरस्य वृहत्द्वितीये नित्यश्च सामतृचः १६ ऊदलत्वाष्ट्रीसाम्नोरुद्धारः १७ विषुवतो दिवैके प्रातरनुवाकमुपाकुर्वन्ति १८ बहिरस्यैके बहिष्पवमानेन स्तुवते १९ अग्निरिन्द्रायोपास्मै पवस्व वाच इति स्तोत्रीयᳬं शुङ्गाः २० वात आवात्विति माषशरावयः २१ यज्ञायज्ञीयभासे व्यतिहरन्त्येके २२ बरामहां असि सूर्येन्द्रमिद्देवतातये श्रायन्तइव सूर्यमिति महादिवाकीर्त्यस्तोत्रीया विकल्पते २३

इति चतुर्थस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

बृहत्पृष्ठश्चेदग्रियवती प्रतिपत्तृतीयात् साहस्रादाज्यानि नित्यैर्विकल्पन्त उत्सेधस्थाने रथन्तरं तस्य महादिवाकीर्त्यमयᳬं सोम इति पार्थमाभिजितानि पृष्ठानीन्द्रक्रतौ श्यैतङ्गोः ककुबुष्णिहावुद्धरतिपिपीलिकमध्याᳬं श्यावाश्वविकर्णगौरीवितान्धीगवौदलभासान्यनुष्टुभ्यौदलस्थाने वा वाङ्निधनं क्रौञ्चमरण्ये गेये तृचयोर्व्रतात्परे १ विश्वजिति यज्ञायज्ञीयबृहती व्यतिहरन्त्येके २ बृहत्पृष्ठश्चेत्तृतीयात् साहस्रात् प्रातःसवनं कालेयस्थाने समन्तमाभिजितानि पृष्ठानीन्द्रक्रतौ श्यैतङ्गोः ककुबुष्णिहावुद्धरति पिपीलिकमध्या अनुष्टुप्प्रभृति व्रतात् ३ उत्तरे पक्षस्ययनविकल्पाः ४ अभिप्लवपृष्ठ्यान् प्रति-

लोमानुपयन्त्यहरावर्त्तकारिणः ५ पृष्ठ्याभिप्लवाननुलोमान् मासा- वर्त्तकारिणः ६ गोआयुषी च विपरिहरन्ति ७ उत्तमं सम्भार्य्यं कुर्वन् सप्तमान्मासान् पृष्ठ्याभिप्लवानुद्धरेत् पञ्चायनमासान् कृत्वा दशरात्रमिश्रादभिप्लवमुद्धरेत् ८ तथा सति पूर्वे पक्षसि विकल्प्यः ९ षष्ठादभिप्लवपृष्ठानुद्धृत्य चतुर्विंशादुत्तरान् कुर्यात् १० समौ पक्षौ चिकीर्षन् पञ्चायनमासान् कृत्वा दशरात्रमिश्रं मासमुद्धरेत् पञ्चदशौ पक्षौ व्रतस्यापरिमात्कं बृहत्पृष्ठं विश्वजितम् ११ विश्वजित उपरिष्टादायुषमेक उपयन्ति १२ तथा सति गोआयुषोरैकाहिके बृहत्यौ १३ दशरात्रमेक आवर्त्तयन्ति १४ तस्माद्व्रतं यदा परं व्रतान्ते मानसं सांवर्ग्यजिता गोतमाः १५

इति चतुर्थस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

ज्योतिषामयनविकल्पाः १ तत्र यदादितोऽन्ततस्तदूद्ध्वं विषुवतः २ मासि मास्याद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः ३ स षट्त्रिंशदूनो नाक्षत्रः सप्तविंशिनो हि मासाः ४ षष्ठाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौश्च ज्योतिरेवावृत्ते स नवोनो नाक्षत्र एव त्रयोदशी ५ युग्ममासेष्वाद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहः स षडूनश्चान्द्रमसः ६ षष्ठादौ त्रिकद्रुकानभिप्लवञ्चोपदध्यात् सोऽष्टादशाधिकः पौर्णमासी प्रसवस्तैर्य्यगयनिक आदित्यस्य ७ उत्सर्जनानि मासि मासि ८ यथान्त एवमावृत्तानामादिः ९ पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वा- ग्निष्टोममुत्तमे १० तद्वैकत्रिकस्तोमम् ११ असृक्षतेति बहिष्पवमानं गायत्रं गायत्र्यामाश्वमैडं बृहत्यां गोष्ठो वाया रुचेति गायत्रपार्श्वमार्भवः १२ सवनविधं पशुं कुर्वन्नुत्तममभिप्लवपञ्चाहं कृत्वा षष्ठस्थाने सवनविधः पशुः १३ प्रथमञ्चाभिप्लवं पञ्चाहं कृत्वा मासान्ते सवनविधः पशुः १४ सर्वानूनानेके प्रथममभिप्लवपञ्चाहं कुर्युः १५ अहनी वा समस्येयुरभिप्लवपृष्ठ्ययोः सान्निपातिके १६ अभिप्लव- योरुत्तमे १७ तथा सत्येकादश्यां पूर्वपक्षस्य दीक्षित्वा त्रयोदशदीक्षाः

कुर्वीरन् १८ सप्तदश वा १९ व्यत्यासं वा पूर्णो नानूनपूर्णा नावृत्ता-च्छालङ्कायनिनः २० एकाष्टकादीक्षिण उपसर्गिणस्ते तूष्णीमेकत्रिꣳ-शमहरासीरन् २१ सवनविधेन वा पशुना यजेरन् २२ अध्वर्युबह्वृचैः समयं कृत्वा दीक्षेरन्नेवमविलोपो भवतीति भवतीति २३

इति चतुर्थस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

सर्वत्र ब्रह्मा दक्षिणत उदङ्मुखः कुर्याद्धोमेभ्योऽन्यत् १ पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् २ तेषां होष्यत्सु तूष्णीमुपविशेद्धुते यथार्थꣳ स्यात् ३ शूलगवे च बलीन् हृयमाणाननुगच्छेन्निधीय-मानानां दक्षिणतः स्थित्वा निहितेष्वप उपस्पृश्यानपेक्षं प्रत्याव्रजेत् ४ तूष्णीं पाकयज्ञे दक्षिणामोमिति वा प्रतिगृह्णीयात् ५ पशुरेव पशोर्दक्षिणा पूर्णपात्रं स्थालीपाकस्य ६ उभयोर्वा यथोत्साहम् ७ कर्मादिषु सर्वेषु अध्वर्युसंप्रैषमागमयेत् ८ पूर्वया च द्वारानादेशे प्रविशेत् ९ अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्रश्यं निर्वप्स्यत्सु तूष्णीमुपविशेत् १० निरुप्ते यथार्थꣳ स्यात् ११ तदुद्धरिष्यत्स्वेवमेव १२ तच्चेदृत्विग्भिः प्राशयेयुस्तन्दुलानादायापविध्येयुर्नेष्टाविद्धं-कृतानीति १३ अथान्यान् हुतास्वाश्वत्थीष्वनुदधीरन् १४ आधास्य-मानस्यारण्योः प्रत्तयो यथार्थꣳ स्यात् १५ पूर्वाह्णे दक्षिणेनाग्न्या-यतनानि गत्वा यत्राग्निं मन्थिष्यन्तः स्युस्तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येदावसोः सदने सीदामीत्युपविशेत् भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुषओमित्येतेनोपविशेत् यजुषेति यत्र स्यात् १६ अग्निं प्रणीयमानं यथेतमनुगच्छेत् १७ निधीयमानस्य दक्षिणतः स्थित्वा निहिते यजुषोपविशेत् १८ अत्र प्रथममिति शाण्डिल्यः १९ द्वितीयमिति धानञ्जय्यः २० जाते रथन्तरं गाये-द्वामदेव्यꣳ ह्रियमाणे बृहन्निहिते सर्वाणि तृचेषु मनसा २१ प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीय इति लामकायनः २२ पूर्वे कल्पे भूयाꣳसीति धानञ्जय्यः २३

इति चतुर्थस्य नवमी कण्डिका

अथ दशमी कण्डिका

मन्थिष्यत्स्वरणी आलभ्यारण्योरिति गायेत् १ मथ्यमानेऽग्निं नर इत्येतयोरन्यतरत् २ धूम उदिते त्वेषस्ते धूम ऋण्वतीति ३ प्रज्वलितेऽदर्शिगात्विति ४ निधीयमाने गवां व्रतं यदग्निमीडं इति ५ यानि वैनमध्वर्युर्ब्रूयात्तानि गायेत् ६ तान्युद्गातृकर्मैक उद्गाता सामवेदेनेति श्रुतेः ७ यथा विहव्यसजनीयकयाशुभीयानि होतुः ८ प्रस्तोतुश्च वैराजशक्करीप्रस्तावाः ९ सर्वैश्चाविधानाद्ब्रह्मत्वकारिभिः १० कर्मयोगाच्चोद्गातुश्चत्वारो महर्त्विजः प्राश्नन्तीति ह चातुष्प्राश्यप्राशनम् ११ अधिकारात्तु ब्रह्मणः १२ उद्गात्रे चाविधानात् १३ दृष्टञ्चानेन सामगानं वाजपेयसौत्रामण्योः १४ उद्गातेति यथा भूयसो वादः १५ हौत्रे विधेर्विहव्यादीनि १६ स्तोत्रवत्प्रस्तावाः १७ विराट्सु स्तुवन्ति पुरीषेण स्तुवत इति बहुश्रुतेः १८ अविधानं विधिद्वैधात् १९ यावद्वचनं कर्मयोगः २० हुतायां पूर्णाहुतौ यथार्थꣳ स्यात् २१ अन्ताꣳश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत् २२ तैर्हूते यथार्थꣳ स्यात् २३ इष्ट्यादिषु सर्वेषु यजुषोपविशेत् २४ पूर्वो यजमानात् २५ आहवनीयं प्रति २६ परिध्योर्वा सन्धिꣳ स्त्रुचां वाग्राण्युत्करं वा २७ तमन्तरेणाहवनीयञ्च यजमानसञ्चरोनान्येषाम् २८ तं यदाध्वर्य्युर्ब्रूयाद् ब्रह्मन्निदं करिष्यामीति सवितृप्रसूतोऽदः कुरु भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतेनानुमन्त्रयेत २९

इति चतुर्थस्य दशमी कण्डिका

अथ एकादशी कण्डिका

प्रणीतासु प्रणीयमानासु वाचं यच्छेदातासां विमोचनात् १ तास्वेव प्रणीयमानास्वाहविष्कृतस्तम्बयजुषश्चाध्यासमिधः प्रस्थानीयाया इति वा २ यत्र वाध्वर्य्युबृह्वचौ चेष्टेतां यत्र वा न चेष्टेतां वागयतः प्रायस्त्वेव स्यात् ३ प्रायश्चित्तञ्चेत्कर्त्तव्यꣳ स्याद् भूः स्वाहेति गार्हपत्ये जुहुयात् भुवः स्वाहेति दक्षिणाग्नावाग्नीध्रीये सुत्याचेत् स्वः

स्वाहेत्याहवनीये भूर्भुवःस्वः स्वाहेति तत्रैव ४ हुत्वा ब्रूयाच्चेष्टता- कार्ष्मं प्रायश्चित्तमिति ५ अवेलायां चेद्व्याहरेदयज्ञियं वापद्येतैता एव व्याहृतीरनुप्रेक्षेतेदं विष्णुरिति वर्चम् ६ अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः ७ तदभावे दार्भे ८ सर्वेष्टिष्विति शाण्डि- ल्यायनः ९ प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत मित्रस्य त्वा चक्षुषा प्रतिपश्यामीति १० अप आचम्य प्रतिगृह्णीयाद्देवस्य त्वेति ११ व्यूह्य तृणानि पुरस्ताद्दण्डं सादयेत् पृथिव्यास्त्वा नाभौ सादयामीति १२ अङ्गुष्ठेनानामिकया चादायाग्नेष्ट्वास्येन प्राश्नामीति प्राश्नीयाद- संखादन्निगिरेत् १३ अप आचम्योरसि पाणिं निदधीतेन्द्रस्य त्वा जठरे सादयामीति १४ प्रक्षाल्य प्राशित्रहरणं तत्र निदध्यात् १५ यथाहृतं वा प्रतिहारयेत् १६ ब्रह्मभागमाहृतं तत्रोपनिदधीत १७ तमिष्टौ सꣳस्थितायां प्राश्नीयात् १८ अन्वाहार्य्यमाहृतं तूष्णीमालभेत १९ प्रजापतेर्भागोऽसीति वा २० अथापरं प्रजापतेर्भागोऽस्यूर्जस्वान्यय- स्वानक्षितोऽस्यक्षित्यै त्वा प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि धेहीति २१ तत्रैव यजमानं वाचयेत् प्रजापतिं त्वया समक्षादध्यासमागम्या अन्वाहार्य्यं ददानि ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा हुताद्य मा मा हिꣳसीरहुतो मह्यꣳ शिवो भवेति २२

इति चतुर्थस्यैकादशी कण्डिका

## अथ द्वादशी कण्डिका

समिधं प्रस्थानीयामनुमन्त्रयेत देव सवितरेतत्ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु विश्वे देवास इह मादयन्तामित्युपाꣳशु प्रतिष्ठेत्युच्चैः १ सर्वानुमन्त्रणेन वा २ विमु- क्तासु प्रणीतासु समिध आदध्यात् यथावभृथादुदेत्य ३ एतत्सर्वेष्टीनां ब्रह्मत्वम् ४ समानाहन्येकासने न पुंनर्यजुषोपविशेदिति शाण्डिल्यः ५ अग्न्याधेयेष्विष्टिषु प्रथमायां यजुषोपविशेत उत्तमायाꣳ समिध

आदध्यादिति गौतमः ६ पृथगिष्टिष्विति धानञ्जय्यः ७ चातुष्प्राश्यञ्च प्राश्नत्सु धेनुं दद्याद्ब्रह्मणेऽध्वर्यवे चाग्निपदं धेनूर्होत्रे वत्सतरीर्ब्रह्मणेऽनडुहोऽध्वर्यवे तथोद्गात्रे सर्वे त्रिवर्गाः पष्ठौहीमग्नीध्राय सर्वेभ्योऽश्वरथं कुण्डले चेति ८ एवमेव धेनुमग्निपदञ्चेति शाण्डिल्यः ९ धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रं तत्प्रथमायामिष्टौ दद्यात् १० तथोत्तरयोरन्यत्राजपूर्णपात्राभ्यामिति ११ वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविꣳशो वैतद्वाजसनेयकम् १२ अग्न्याधेयान्तान् कुर्वते पूर्णाहुतिमक्षाभिहोममिष्टीरिति १३ मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ १४ वाजिनाश्विनघर्माणामृत्विक्षूपहवमिष्ट्वा प्राणभक्षं भक्षयेत् प्रत्यक्षभक्षꣳ स्वे यज्ञे १५ यन्मे रेतः प्रसिच्यते यद्वामेऽपि गच्छति यद्वा जायते पुनस्तेन माशिवमाविश तेन मा वाजिनं कुरु तस्य ते वाजपीतस्योपहत उपहूतस्य भक्षयामीति वाजिनस्य १६ ऋतूनान्त्वा वाक्षिनां वाजिनं भक्षयामीति वा १७ उभाभ्यां वोभाभ्यां वा १८

इति चतुर्थस्य द्वादशी कण्डिका

इति चतुर्थः प्रपाठकः समाप्तः

## पञ्चमः प्रपाठकः

### अथ प्रथमा कण्डिका

चातुर्मास्येषु वरुणप्रघासानाꣳ स्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् १ विलिखिते चात्वालेऽध्वर्युणा सह प्रत्यावृज्याहवनीय उपविशेत् २ अग्नी प्रणीयमाणौ यथेतमनुगच्छेत् ३ अध्वर्युश्चेद्ब्रूयाद्ब्रह्मन्नेकस्फ्ययोपसम्भिन्धीति स्फ्येनाहवनीयात्पाꣳशूनुपहत्योत्तरस्या वेदेर्दक्षिणादन्तात्कर्षन्नियादावेदि ४ मध्यादेका चेत् ५ प्रोह्य स्फ्यं पश्चिमेन वेदी गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत् ६ एतत्कर्माग्निप्रणयनेषु सर्वेषु ७ अवभृथन्यङ्गं गच्छत्सु पूर्वेणाग्नी चात्वालञ्च गच्छेत् पश्चिमेन वेदी चालात्वञ्च स्वे यज्ञे हविर्यज्ञेष्वेष सञ्चर उत्तरेण विहारं कर्मभ्यः ८ यथा चात्वाले तथा यूपे शामित्रे च पशौ ९

अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयः १० साक-मेधेषु क्षीरौदनस्य यथार्थं प्राश्नीयात् ११ यजमानं ब्रूयात्प्रभूतमन्नं कारय सुहिता अलङ्कृता भवतेत्यमात्यान् ब्रूहि वत्साꣳश्च मातृभिः सह वासयेत १२ पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति ब्रह्माणमुपवेश्य १३ ऋषभेऽरुवति ब्रह्मैव ब्रूयाज्जुहुधीति १४ तूष्णीं पैतृयज्ञिकायाꣳ सर्वं कुर्य्यादोमित्येवानुमन्त्रयेत् १५

इति पञ्चमस्य प्रथमा कण्डिका

अथ द्वितीया कण्डिका

यज्ञोपवीतप्राचीनावीतयोरध्वर्युमनु विदधीत १ तस्या हवीꣳषि निर्वप्स्यत्सु दक्षिणया द्वारा प्रपद्य पश्चात्प्राङ्मुख उपविशेत् २ एवमेव वेदिं गत्वा स्तम्बयजुर्हरिष्यत्सु ३ आज्यभागयोर्हुतयोर्दक्षिणेनाग्निं गत्वा पुरस्तात् प्रत्यङ्मुख उपविशेद्यजमानश्च ४ हुते ष्विष्टकृते यथेतं प्रत्याव्रज्योपविशेताम् ५ प्राशित्रमाहृतमुपघ्रायापविध्येत् ६ आज्य-ञ्चेत् प्राशित्रभागादवद्येयुस्तदुपघ्रायाप उपस्पृशेत् ७ इडाञ्च प्रतिगृह्य प्रतिप्रयच्छेत् ८ परिषिक्तेऽध्वर्युणाहवनीयमुपतिष्ठेरन् दक्षिणेनाग्निं गत्वोऽत्तरेण दक्षिणाग्निꣳ स्वे यज्ञे ९ अक्षन्नमीमदन्त हीति प्रथमा सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि प्रनूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु योजा न्विन्द्र ते हरी इति द्वितीयोपो षु शृणुही गिर इति तृतीया १० तत एवेक्षमाणा गार्हपत्यं मनोन्वाहुवामहे नाराशꣳसेन सोमेन पितृणाञ्च मन्मभिः पुनर्नः पितरो मनो ददातु दैवो जनो जीवं व्रातꣳ सचे मह्या न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे यमिति ११ कयानश्चित्र आभुवदित्येकया दक्षिणाग्निम् १२

इति पञ्चमस्य द्वितीया कण्डिका

अथ तृतीया कण्डिका

त्रैयम्बका नामापूपा भवन्त्येककपालाः १ तेषां यमध्वर्युराखत्कर उपोपेत् तत्राप उपस्पृशेयुः शिवा नः शन्त मा भव सुमृडीका सरस्वति

मा ते व्योम सन्दश इति २ आसीतेतरेषाᳬं हूयमान इति धानञ्जय्यः ३ तिष्ठेदिति शाण्डिल्यः ४ हुते तिष्ठन्तो जपेयुरवाम्ब रुद्रमयक्ष्महमवदेवं त्र्यम्बक यथा नः श्रेयसस्करद्यथा नो वसीयसस्करद्यथा नः पशुमतस्करद्यथा नौ व्यवसाययाद्भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजᳬंसुगं मेषाय मेष्यैसु भेषजं यथा सदिति ५ यजमानस्यामात्या एकैकमपूपमादाय त्रिः प्रदक्षिणमग्निं परियुः ६ तत्र ब्रह्मा परियञ्जपेदिति धानञ्जय्यस्तिष्ठन्निति शाण्डिल्यस्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनमुर्वारुकमिव बन्धनान् मृत्योर्मुक्षीयमामृतादिति ७ एवं परीत्योदस्येयुः ८ तेषां ब्रह्मैकं लिप्सित्वा यस्य स स्यात्तस्मै प्रयच्छेत् ९ तस्य वैव सन्तं पाणावालभेत १० तथैव प्रतिपरीयुः ११ यत्रैनानध्वर्युरासजेत्तत्रोपतिष्ठेरन्नेष ते रुद्र भागस्तेनावसेन परोमूजवतीतीहि कृत्तिवासाः पिनाकहस्तोऽवततधन्वोमित्यातमितोरुपेयुः १२ शन्नो देवीरित्यप उपस्पृश्यानपेक्षं प्रत्याव्रजेयुः १३ वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेषु १४ पशूनां यूपाहुतिं होष्यत्सु तूष्णीमुपविशेत् १५ हुतायां यथार्थᳬं स्यात् १६ वपायाᳬं हुतायामिदमाप इति चात्वाले मार्जयित्वा सर्वपशूनां यथार्थᳬं स्यात् १७

इति पञ्चमस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् १ आहृतं पुरोडाशमालभ्य ब्रूयात् प्राश्नन्तु ये प्राशिष्यन्त इति २ अनुव्रजेत्सर्वपशूनां पत्नीसंयाजानिति धानञ्जय्यः ३ सवनीयस्यैवेति गौतमः ४ न सवनीयस्य च नेति शाण्डिल्यः ५ हृदयशूलोऽत्रावभृथन्यङ्गस्थाने भवति तस्मिन्नप उपस्पृशेयुर्द्धाम्नो धाम्नो राजᳬंस्ततो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नोमुञ्च सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्म इति ६ अभ्युक्षणप्रभृत्यत ऊर्द्ध्वम् ७ नादित्यमुपतिष्ठेरन् ८ पूर्णाहुतौ हूय-

मानायामासित्वा हुतायां यथार्थं स्यात् ९ सक्तुहोमांश्चेज्जुहु-
युरासीता तेषां होमात् १० सौत्रामण्यां सुराकर्मस्वाव्राजमासीत्
११ तत्र द्वावग्नी अतिप्रणयति १२ तयोर्दक्षिणत आसीत् १३ दक्षि-
णमध्यधिकुम्भ्यामासक्तायां सुराशेषेष्वासिच्यमानेषूपतिष्ठेरन्यत्ते
पवित्रमर्चिष्यग्ने विततमन्तरं ब्रह्म तेन पुनीहि मेति १४ अश्विनोर्ग्रह-
स्य भक्षयेद्यमश्विना नमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेणेमन्तं
शुक्रं मधुमन्तमिन्दं सोमं राजानमिह भक्षयामीति भक्षयेत् १५
यजमानश्चेद्बसातिशेषेणाभिषिञ्चेयुरुपोत्थायान्तरेणाग्नी गत्वाध्वर्युणो-
क्तः संशानानि गायेत् पदाय पदाय स्तोभेत् १६ निधनान्युपयन्तो
यजमानस्य मूर्द्धानमालभेरन् १७ सन्त्वाहिन्वन्तीत्येतेषां पूर्वः पूर्वः
स्तोम उत्तरन्निधनम् १८ श्रवसः स्थाने सञ्जित्यै विजित्यै सत्यजित्यै
जित्या इति क्षत्रियस्य सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति
वैश्यस्य १९ द्वे सौत्रामण्यौ कौकिली चरकसौत्रामणी च २०
कौकिल्यां सामगानं नेतरस्याम् २१ सप्त हविर्यज्ञसंस्थाः सप्त
सोमसंस्थाः २२ तासां हविर्यज्ञसंस्थानामग्न्याधेयमग्निहोत्रं
दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सौत्रामणी पाकयज्ञ इति २३
अथ सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रो
वाजपेयोऽप्तोर्याम इत्यप्तोर्याम इति २४

इति पञ्चमस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

सुत्यायां ब्रह्मणः प्राक्सुब्रह्मण्याया उद्गात्रेण समानं कर्म्म १
ईक्षणाक्रमणे वेदेः सञ्चरधिष्ण्योपस्थानदक्षिणाप्रतिग्रहभक्षाः स्तोम-
विमोचनाच्चोद्ध्वर्वमन्यत् सामगानात् २ अनु स्यात्तु दीक्षणीयायाम् ३
तस्यां संस्थितायामासीतादीक्षणाद्यजमानस्य ४ तं यदाध्वर्यु-
र्वाचं यमयेदथ यथार्थं स्यात् ५ महावीरान् सम्भरिष्यत्सु तूष्णी-
मुपविशेत्सम्भृतेषु यथार्थं स्यात् ६ प्रायणीयायां संस्थितायां
यथेतन्निष्क्रम्य पूर्वेण पत्नीशालां तिष्ठेदाभिहोमात् पदस्य राजक्रयण्याः

७ अभिहुत उत्तरेण सोमवहनं गत्वा प्राग्वा पदाभिहोमाद्दक्षिणेन यत्र राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् ८ क्रीते प्राङुत्क्रामेत् पश्चिमेनैनꣳ हृत्वा राजानमादध्युराहितं पूर्वेण परीत्योह्यमानमनुगच्छे-द्दक्षिणेन चेद्गतः स्यात् ९ उत्तरेण चेत्क्रीते प्रत्यङुत्क्रामेत् १० पूर्वेणैनꣳ हृत्वा राजानमादध्युः ११ आहितं पश्चिमेन परीत्योह्यमानमनुगच्छेत् १२ तामेवात्रेषामन्वावर्त्तेत सा ह्यस्य प्राचि वर्त्तमानस्य दक्षिणेषा भवतीति १३ विमुक्ते चान्तरेण सोमवहनं पत्नीशालाञ्च दक्षिणोत्क्रम्य तिष्ठेद्दीक्षितश्चेत् १४ आ राज्ञोऽवहरणात् १५

इति पञ्चमस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

प्रवेश्यमानꣳ राजानमनुप्रविशेदव्यवयन्नग्निना १ सम्बाधञ्चेत् स्या-द्दक्षिणयापि द्वारा प्रविशेत् २ उत्तरेणाहवनीयं पश्चिमेन वेदिꣳ सञ्चरेत् दीक्षितश्चेत् ३ आतिथ्यामिष्टिं निर्वपन्ते ४ ताञ्चेदनवहृते राजनि निर्वपेरन् ब्राह्मणꣳ राजनि समादिश्य तत्रासीत ५ तस्याꣳ सꣳ-स्थितायां तानूनप्त्रमाज्यमवमृश्य जपेयुर्हविरसि वैश्वानरमनाधृष्ट-मनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुषगेषꣳसुवितेमाधा इति ६ अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्त्रंसयेत् ७ तꣳ हिरण्येनान्तर्द्धायाभिमृशेयुरꣳशुरꣳशुष्टे देव सो-माप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामास्वमिन्द्राय प्यायस्वाप्याययास्मात्सुखीꣳ सन्यामेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति ८ काशमये प्रस्तरे निह्नुवीरन्दक्षिणानुत्तानान् पाणीन् कृत्वा सव्यान्नीच एष्टा राय एष्टा वामानिप्रेषे भगायर्त्तमृ-तवादिभ्यो नमोदिवे नमः पृथिव्या इति ९ उपसदिष्टिरत ऊर्द्ध्वं तस्यां तथैवाभिमर्शननिह्नवने सव्या अपराह्ण उत्तानाः स्युर्दक्षिणा न्यञ्चः १० स्त्रुवेणोपसद्धोमे हुते विद्यात्सꣳस्थितेति ११ तस्या घर्मः प्रवर्ग्यवति पूर्वः १२

इति पञ्चमस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

तमभीन्धिष्यत्सु गार्हपत्यं गत्वा यजुषोपविशेद्दक्षिणेन दक्षिणाग्निमुत्तरेण बहिश्चेत् १ रुचितो घर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् यमध्वर्युर्ब्रूयात् २ तꣳ ह्रियमाणं यथेतमनुव्रजन् जपेद्विश्वा आशा दक्षिणधक्सर्वान् देवानयाडिहस्वाहा कृतस्य घर्मस्य मेधोः पिवतमश्विनेति ३ आश्रावित उपविश्य जपेदश्विना घर्मं पातं हार्द्वानमहर्दिवाभिरूतिभिस्तन्त्रायिणे नमो द्यावापृथिवीभ्यामिति ४ हुते यजमानं वाचयेदपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसातामिहैव रातयः सन्त्विति ५ घर्मशेषस्य भक्षयेन्मधुहुतमिन्द्रतमेऽग्नावश्याम ते देव घर्म नमस्तेऽस्तु मा मा हिꣳसीरिति ६ सत्रञ्चेत्स्याद्यजमाना उपह्वयध्वमित्येवोपह्वानम् ७ एवꣳ सदा प्रवर्ग्योपसदः कुर्य्यात् ८ महावेदेः स्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् ९ विलिखिते चात्वाले यथार्थꣳस्यात् १० उत्तरवेदिन्निर्वप्स्यत्सु तूष्णीमुपविशेत् न्युप्तायां यथार्थꣳ स्यात् ११ अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत् १२ तेषु हुतेषूख्यां मृत्तिकामाह्रियमाणामनुगच्छेत् १३ तस्याꣳ सम्भ्रियमाणायामासित्वा सम्भृतायां यथार्थꣳ स्यात् १४

इति पञ्चमस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

आहवनीयञ्चेष्यत्सु यजुषोपविशेत् १ तस्मिन् सञ्चित उख्यामासन्दीं नैर्ऋतीश्चेष्टका अरण्यꣳह्रियमाणा अनुगच्छेत् २ निधीयमानानां दक्षिणतः स्थित्वा निहितास्वप उपस्पृश्यानपेक्षं प्रत्याव्रजेत् ३ अग्निं विक्रक्ष्यत्सु सर्वौषधञ्च वप्स्यत्सु तूष्णीमुपविशेत् ४ तैः सार्द्धं प्रत्याव्रज्य चितीः प्रणीयमाना अनुगच्छेत् ५ निधीयमानानां दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्यासन्नो यजुषोपविशेत् ६ लोकंपृणासूपधीयमानासु ब्राह्मणं तत्र समादिश्य यथार्थꣳ स्यादिति

शाण्डिल्यः ७ आसीतैवेति धानञ्जय्यः ८ एवꣳ सदा चितिषु कुर्य्यात् ९ सञ्चितकर्माणि करिष्यत्स्वाव्राजमासीत १० सम्राडासन्दीꣳ ह्रियमाणामनुगच्छेत् ११ परिषिच्यमानेऽप उपस्पृश्य तैः सार्द्धं प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेदप्रतिरथं जपꣳस्तूष्णीमनग्निचित्या चेत् १२ निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणा बहिर्वेदि यजुषोपविशेत् १३ हविर्द्धाने प्रवर्त्त्यमाने अनुगच्छेत् १४ परिवार्यमाणयोस्तत्रैव गत्वासीत १५ उच्छ्रितायामौदुम्बर्यां यथार्थꣳ स्यात् यथार्थꣳ स्यात् १६

इति पञ्चमस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण १ पश्चिमेनोत्तरवेदिमुदङ्ङतिक्रम्याक्रमणयजुर्जपेच्चात्वालसमीपे दीक्षितश्चेत् २ तूष्णीमत ऊर्द्ध्वं वेदेराक्रमणम् ३ क्रीत्वा राजा येनातिहृतः स्यात्तेन गत्वा तूष्णीमुपविशेत् ४ राजानꣳ हरेत्युक्तः पूर्वेणाग्निमेकस्मा अतिप्रदाय तान् प्रसव्यं परीत्यादायानुगच्छेद्दक्षिणेन चेद्धृतः स्यात् ५ उत्तरेण चेद्यथेतमग्निं परीत्यादायानुगच्छेत् ६ अन्येन चेद्ब्रह्मा व्रजितः स्यादन्येन राजा तेनैनं प्रगृह्णीयात् ७ एतौ त्वेव ब्रह्मणो गतिकल्पावहरतोऽपि ८ आसीताग्नीध्रीय आहुत्योर्हूयमानयोरिति धानञ्जय्यः ९ तिष्ठेदिति शाण्डिल्यः १० उत्तरेणाग्नीध्रीयꣳ राजानमाज्यानि च ह्रियमाणान्यनुगच्छेत् ११ प्रवेशितेषु हविर्द्धानं पश्चिमेन गत्वासीतेति गौतमः १२ पूर्वेणेति शाण्डिल्यायनो दक्षिणस्य द्वारबाहोः पुरस्ताद्यजुषेति १३ अग्नीषोमीयवपायाꣳ हुतायां यथेतमुदङ्ङतिक्रम्य चात्वाले मार्जयेत १४ एवमेवापररात्र आज्येषु प्रविष्टेषूपवेशनं मार्जनञ्च सवनीयवपायाꣳ हुतायाम् १५

इति पञ्चमस्य नवमी कण्डिका

## अथ दशमी कण्डिका

पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् १ दीक्षितश्चेत् सर्वा इडा अन्वारभेत २ वसतीवरीषु परिह्रियमाणासु दक्षिणोत्क्रम्य तिष्ठेददीक्षितश्चेदा तासां परिहरणात् ३ आग्नीध्रीयँ राजानँ ह्रियमाणमनुगच्छेत् ४ निधीयमानस्य दक्षिणतः स्थित्वा निहिते यथार्थँ स्यात् ५ दीक्षितश्चेत्तत्रैव संविशेत् ६ अपररात्र आज्यानि ग्रहीष्यतः पूर्वेण गत्वाग्निञ्च पश्चिमेन वा यजुषोपविशेत् ७ आत्तेषु प्राङुत्क्रम्य प्रसव्यं परीत्यानुगच्छेत्पूर्वेण चेद्गतः स्यात् ८ पश्चिमेन चेद्यथेतमग्निं परीत्यानुगच्छेत् ९ प्रवेशितेषूपविशेत् १० आज्येष्वेव ग्रहीष्यमाणेष्वत्रोपविशेदिति शाण्डिल्यः ११ अध्वर्यणोक्तो वाचं यच्छेदा तृतीयं प्रातरनुवाकस्य प्रथमायाः १२ आ वा परिधानीयायाः १३ आ वोपाँश्वन्तर्यामयोर्होमात् १४ आ वा बहिष्पवमानात् १५ हविर्द्धानञ्चेत् पूर्वेण गतः स्यादुपाँश्वन्तर्यामौ होष्यत्सूदङङतिक्रम्य तिष्ठेददीक्षितश्चेत् १६ आ तयोर्होमात् १७ निःसर्पत्स्वन्वारभेत १८ तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात् १९ आस्तावं प्राप्यानासन्नो यजुषोपविशेत्प्रस्तोतारं प्रति २०

इति पञ्चमस्य दशमी कण्डिका

## अथ एकादशी कण्डिका

रश्मिरसीत्येतावनुवाकौ स्तोमभागाः १ तैः पृथगनुपूर्वँस्तोत्राण्यनुमन्त्रयेत ब्रह्मन् स्तोष्यामः प्रशास्तरित्युक्ते २ ऊद्ध्र्वं प्रथमाद्रात्रिपर्य्यायाद्यत्र स्यादमुष्मै त्वेति तं जिन्वेति तत्र ब्रूयात् ३ सवितृप्रसूताबृहस्पतये स्तुतेत्येकैकस्यान्तः ४ पूर्वेषाञ्च ५ भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतद्वाधिकं कुर्य्यादोङ्कारं वा ६ यथाम्नायँ सन्धेरनुमन्त्रयेत ७ त्रैधं विभजेदिति धानञ्जय्यो वसुकोऽसि वस्पष्टिरसि वेषश्रीरसि वसुकाय त्वा वस्पष्टये त्वा वेषश्रिये त्वा वसुकं जिन्व वस्पष्टिं जिन्व वेषश्रियं जिन्व सवितृप्रसूता वृहस्पतये स्तुतेति ८ स्तुत देवेन सवित्रा प्रसूता इत्यनुमन्त्रयेत मानसं वाजपेये च बृहत् ९ आनन्तर्य्येणेतराणि १० ईद्ध्मात्स्तोत्राणि पूर्वेण तद्विवृद्धेः

११ परेण वा तन्निकामनात् १२ मानसवद्वातिरिक्तसामान्यात् १३ सर्वानुमन्त्रणेन वानुक्तत्वात् १४ यद्यत्स्तोत्रं लुप्येत सहैव स्तोमभागेन १५ स्तुते बहिष्पवमानेन तत्रैव गत्वासीत १६ वपायाऽं हुतायां मार्जयित्वा धिष्ण्यानुपस्थायोक्तऽं सदस्युपवेशनम् १७

इति पञ्चमस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

स्तुतशस्त्रयोर्वाचं यच्छेत् १ अनूच्यमाने च सर्वत्र २ वषट्कृते विसृजेत ३ अवभृथादुदेत्यानुष्याद्यज्ञशेषम् ४ अहर्गणेष्वेनऽं सदातिप्रैषेण प्रशास्ता वाचं यमयति राजानऽं रक्षेति चाह तदुभयं कुर्यादा वसतीवरीणां परिहरणात् ५ तत्सत्रे पर्यायेण कुर्युः ६ अहीने तु ब्रह्मैव ७ वाजपेये पृष्ठस्य स्तोत्रमनुमन्त्र्य सदस्यं ब्रह्मासन उपवेश्य निष्क्रामेत् ८ पूर्वेणाग्नीध्रीयऽं स्थूणा निखाता स्यात् ९ दक्षिणेन मार्जालीयमन्तर्वेदीति शाण्डिल्यः १० तस्यामौदुम्बरऽं सप्तदशारऽं रथचक्रं प्रतिमुक्तऽं स्यात् ११ तदभावे यत् किञ्च रथचक्रम् १२ तस्मिन् बाहू आदध्याद्देवस्याहऽं सवितुः प्रसवे सत्यसवसो बृहस्पतेर्वाजितो वाजजितो वर्षिष्ठमधि नाकऽं रुहेयमिति १३ रथेष्वाजिन्धावत्स्वाविर्मर्या इति गायेदाकारमुद्गीथादौ लुप्त्वा १४ तस्य स्थाने प्रत्याहृत्य द्व्यक्षरमग्मन्निति गतेषु १५ यथाधीतमा-धावत्स्वासृतेषु वा १६ सर्वत्र वा यथाधीतम् १७ परिवर्त्तयन् गायेत्परिवर्त्त्य गायेद्गीत्वा वा परिवर्त्तयेद्गायतो वान्यः परिवर्त्तयेत् १८ उदङ्ङवरोहं मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णो-र्विक्रान्तमसीति १९ अभि दक्षिणमावृत्य सदः प्रविशेत् २० तत्रासीनो हिरण्यं मधु च नाना प्रतिगृह्णीयात् २१ ऋतपेये च दक्षिणाञ्चमसम् २२ ब्राह्मणाय मधु दद्यान्निदधीत हिरण्यम् २३ त्रिष्टुप्छन्दसा सर्वभक्षञ्चमसं भक्षयेत् २४ तं प्रतिगृह्णीयादिति स्थविरो गौतमः कस्त्वा ददाति स त्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वा कं भक्षयामीति भक्षयेद्वाग्देवी सीमस्य तृप्यत्विति वा

तृप्यत्विति वा २५

इति पञ्चमस्य द्वादशी कण्डिका

इति पञ्चमः प्रपाठकः समाप्तः

षष्ठः प्रपाठकः

अथ प्रथमा कण्डिका

सन्तनि चोद्यमानमेकैकस्याꣳ सर्वं स्तोमसम्भवात् १ तथा चान्यानि स्वविच्छन्दःसु २ सन्तनीति यद्वाहिष्ठीयवत् ३ त्रिषु वा तृचेष्वेकर्च्चवत्तृचे दर्शनात् ४ साम्ना च स्तोमसंख्यानात् ५ तिसृष्वाचार्याः स्मृतेः ६ यथान्यानि सामानि ७ सन्तानाच्च सन्तनि ८ सन्ततं गायतीति चाह ९ एकर्च्चेषु चोद्धृतं कल्पे १० प्रमाणार्थन्तृचे दर्शनꣳ स्तोत्रीयायाꣳसामसमाप्तिः ११ तासु सर्वासु प्रस्तावाः स्युर्न्यायप्रगाथधर्माभ्याम् १२ नोत्तरयोराचार्य्याः स्मृतेः १३ सन्ततं गायतीति च भक्तिलोपदर्शनात् १४ तस्य स्तोत्रादावावर्त्तिषु प्रस्तावः पर्य्यायादिषु वा १५ सर्वत्र प्रथमायामिति धानञ्जय्यः १६ निधनभूताः प्रतिहारवत्योऽप्रस्ताव्याः १७ धानञ्जय्येन प्रथमायाꣳशाण्डिल्य उत्तरे तु स्तोत्रीये विष्टावमुखेष्वेवाप्रस्ताव्ये विष्टावेषु चैकिषु त्रिवृत्स्तोमे च परिवर्त्तिनी विधानम् १८ उत्तरयोः स्तोत्रीययोश्छन्दस्तो विप्रतिपत्तिः १९ द्विपदे स्यातामप्रस्ताव्ये ककुभौ प्रस्ताव्ये २० बृहत्यौ शाण्डिल्यः ककुभावप्रस्ताव्ये २१ तथा सत्युभे ककुभौ स्थविरो गौतमः २२ बृहत्यौ धानञ्जय्यः २३

इति षष्ठस्य प्रथमा कण्डिका

अथ द्वितीया कण्डिका

प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे १ ताः पथ्याः सर्वाभिप्रायाश्च २ यथाशिषं वा विदध्यात् ३ द्वितीयां त्रिवृतः पथ्यामेकेऽविष्टावा ह्याद्याः ४ सꣳहारशिरःसन्धिसन्तनिषु चानुपपन्ना ५ अवर्षुकस्त्विवति चास्याम् ६ इषोर्व्यत्यासमिषुभ्याम् ७

तयोः पूर्वा श्येनस्याग्निष्टोमसाम्नि ८ सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीत ९ अभिचरणीया उद्धृत्येति शाण्डिल्यः १० शाण्डिल्यायनः कुलायिनीम् ११ भस्त्राञ्चोभौ १२ धानञ्जय्यस्तामेव १३ पथ्याभिर्होतृषामाणि विदध्यादपथ्याभिरितराणि १४ समाप्तासु ता एवादितः पुनः प्रयुञ्जीत १५ तथा कुर्वन् प्रागाथिकानि परिवर्त्तिन्या प्रथमस्येति शाण्डिल्यः १६ सकृत्सर्वाः समाप्य पथ्ययैव तत ऊर्द्ध्वमिति धानञ्जय्यः १७ असमाप्तासु त्वपि होतृषाम पथ्ययैव तथा कुर्य्यात् १८ कुलायिनीं चेत् प्रयुञ्जीत प्रथमस्याह्नो द्वितीयं पृष्ठन्तया विदध्यात् १९ षष्ठस्याह्न उत्तममुक्थमुत्तमया त्रयस्त्रिंशस्य विष्टुत्या विदध्यात् २० उक्तः प्रयोगो ब्राह्मणेन चतुश्चत्वारिंशे २१ सवनसमीषन्ती पूर्वः प्रयोगः स्तोत्रसमीषन्त्युत्तरः २२ तथा कुर्य्या-दहर्भाजि २३ पथ्यामन्यत्र २४ अष्टाचत्वारिंशस्योत्तरया मैत्रावरुण-स्यैवाज्यं विदध्यात् २५ सर्वत्र वा होतृकसामानि २६ मध्यमे मध्यमे वा सवनेषु २७ द्वितीयचतुर्थे वा २८ उत्तरे वा २९ अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः ३० सर्वा इति धानञ्जय्यः ३१

इति षष्ठस्य द्वितीया कण्डिका

अथ तृतीया कण्डिका

तृचसूक्तानामादिग्रहणेन विधिरनादेशे १ तृचोत्तमायां प्रतिलोमः २ मध्यमायाँ सैव ३ रेतस्यैकत्रिकस्य बहिष्पवमानम् ४ उद्भि-द्यनुरूपमेकर्चँ शाण्डिल्यः ५ स्तोत्रीयं गौतमधानञ्जय्यौ ६ उत्तमौ तृचौ बहिष्पवमाने चातुर्मास्येषु ७ तथा साहस्तोत्तमे ८ सर्वस्वारे च तृचाः ९ वामदेव्ययज्ञायज्ञीयारण्येगेयपृष्ठपूर्वाणां तृचकरणमुत्त-रयोः पवमानयोः १० अन्येषाञ्चाविप्रतिषेधः ११ एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्य्यात् १२ द्वौ तस्यामेव १३ त्रीनेकतृचे नाना स्तोत्रीयासु १४ चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोः १५ माध्यन्दिने तदेको द्वौ वा बृहत्यामेव १६ त्रीन्यतरस्याँ सम्भवेयुः

१७ अनध्यासा चेत् द्वयोरन्यतरं गायत्र्यां धानञ्जय्यः १८ उभौ बृहत्याᳫं शाण्डिल्यः १९ साध्यासायाञ्चेदेकोऽध्यास्यायामेवान्ततः २० द्वौ तस्यां चादितश्च सा शशकर्णक्लृप्ता २१ त्रिष्वध्यास्या लुप्यत २२ चतुरो नाना स्तोत्रीयासु २३ द्वादशे बृहत्याᳫं सामतृचः २४ आर्भवे चेदेकोऽनुष्टुभि २५ द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येण २६ उष्णिक्ककुभोस्तृचैकर्चत्वमव्याघातेन २७

इति षष्ठस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

वामदेव्यन्तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीयप्रभृतीनि च त्रीणि १ सम्भवति स्तोमेऽन्त्यᳫं सर्वत्र तृचे २ द्वितीयञ्चेदरण्ये गेयम् ३ तदभावे यदन्त्यात् पूर्वम् ४ एकर्चस्थानेष्वनापद्यमानानि तृचेषु कुर्य्यात् गायत्रं त्रिणिधनं मध्यन्दिने मध्ये निधनमैडमार्भवे ५ अनादिष्टतृचैकर्च्चान्येतेनोद्देशेन कल्पयेत् ६ ककुव्यत्र मध्यन्दिन एकर्च्चस्तस्यामन्यत्रोत्तमाद्व्रात्यस्तोमात् ७ पूर्वयोर्व्रात्यस्तोमयोरार्भवे गायत्रमेकर्च्चे धानञ्जय्यस्तृचे मरुताᳫं सᳫंस्तोभम् ८ विपरीतᳫं शाण्डिल्यः ९ चतुर्ऋचानामावृत्तिष्वन्त्यामुद्धरेत् १० तृतीयाᳫं सर्वस्वारस्वरसाम्नोः ११ प्रवामर्चन्तीति द्वितीयाम् १२ सुषमिद्ध इत्यत्रिवसिष्ठशुनककण्वसंकृतिवध्र्यश्वानां तानूनपातीम् १३ नारा-शᳫंसीमन्येषाम् १४ समवाये तु भूयसां कल्पः १५ गृहपतिं वानुसत्रिणोऽनुभवन्तीति भवन्तीति १६

इति षष्ठस्य चतुर्थी कण्डिका

## अथ पञ्चमी कण्डिका

वर्द्धमानेषु स्तोमेषु प्रथमस्य पर्य्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनम् १ मध्यमावापस्थानम् २ उत्तमा परिचरा ३ परिचरा तृचभागावापस्थानमिति मध्यमे ४ आवापस्थानं परिचरा तृचभागेत्युत्तमे ५ एते विष्टावाः ६ तदभावे तृचभागास्थानेषु

पर्यायाणां पर्यायाः स्युः ७ यथा वैकः पर्यायः ८ नैकिनीपर्याया विद्यन्ते ९ तथा त्रिके विष्टावाः १० त्रिवृतश्चोद्यत्याम् ११ समेषु समः प्रयोगः स्तोत्रीयाणाम् १२ एकैकाधिशयेष्वधिका द्वे द्व्यधिशयेषु १३ ते विषमाः १४ युग्मायुक्ताद्व्युत्तरीभावेण वर्त्तन्ते १५ अयुज एकिप्रभृतयो द्विकप्रभृतयो युजः १६ त्र्युत्तरीभावेणोभयेषाँ समवैषम्यम् १७ एकिप्रभृतय एकाधिशयाः १८ द्विकप्रभृतयो द्व्यधिशयाः १९ समास्त्रिकप्रभृतयः २० विषमाः समपर्यायैर्वर्त्तन्ते २१ यावभितोऽनन्तरौ समौ तयोः पर्यायान् सँहरेत् २२ पूर्वस्यैकमेकाधिशयेषु २३ द्वौ द्व्यधिशयेषु २४ उभयान् यथाजाति २५ युग्मायुग्भ्यो वा २६ तत्र युजामेकाधिशयानामयुजः पूर्वौ पर्यायौ २७ उत्तरौ द्व्यधिशयानाम् २८ विपर्ययो युग्मायुजामयुक्षु २९ यथास्थानं पर्य्यायान् कुर्य्यात् सोऽविदोषः ३०

इति षष्ठस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

यदवसानः पूर्वः पर्यायस्तत्प्रभृतिरुत्तरः १ तत्सामात्साम्यम् २ तदुभयं कुर्य्यात् ३ ब्रह्मायतनीयाञ्च ४ तथा पर्यायरोहमसम्भवत्सु सर्वेषु समात्समामेव कुर्यात् ५ पर्यायप्रत्यवरोहन्तु वर्जयेत् ६ विडायतनीयाञ्च ७ प्रथमायाः प्रयोगे भूयिष्ठे ब्रह्मायतनीया मध्यमायाः क्षत्रायतनीयोत्तमाया विडायतनीया ८ दाशरात्रिकेभ्यः पर्यायकृतौ पथ्यापर्यायानेव संहरेत् ९ परिवर्त्तिन्यास्तु त्रिवृतोऽनादेशे १० एष न्यायोऽनादिष्टानाम् ११ एकिन्यावर्त्तिस्थानगते त्रिष्पुरस्ताद्धिंकारँ शाण्डिल्यः त्रिके च प्रथमया स्तोमपूरणम् १२ तृचेन धानञ्जय्यः सकृच्चैकिनि हिङ्कारम् १३ जातिसँहारः पञ्चिनि १४ पञ्चदशपर्य्यायैः पृथगनुपूर्वँ रात्रिपर्य्यायान् विदध्यात् संलङ्घितायामिति भाण्डितायनः १५ तत्र विष्टावाः पर्य्यायस्थानेषु स्युः पृथक् च स्तोत्रीयासु पर्यायाः १६ दाशरात्रिकेभ्य एकया ज्यायःसु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत् १७ ब्रह्मायतनीया तु तेषु क्षत्रायतनीया

वा १८ आस्कन्दन्तु गौतमश्चत्वारिंशे १९ धानञ्जय्य इतरेषु २०
इति षष्ठस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

दशिनि चतुष्को मध्ये परिवर्त्तिनी पर्यायावभितः १ उद्यत्या वा २ उद्यतीपर्याययोर्ब्रह्मायतनीयां कुर्वन् प्रथमायाञ्चतुष्कं कुर्यात् ३ द्वादशे तृचभागास्थानेषु द्विकाविष्टावाः ४ त्रयोदशत्रयोविंशयोः पञ्चविंशे च मध्यमः पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु ५ तथैकान्नत्रिंशैकत्रिंशयोः ६ रूढपर्याया वा ७ तेषां प्रथमे युग्मायुक्संहारं शाण्डिल्यायनः ८ द्वितीये शाण्डिल्यः ९ उभयोर्जातिसंहारं धानञ्जय्यः १० शाण्डिल्यश्च पञ्चविंशे ११ अष्टादशंसप्तदश एवावपेदिति गौतमः १२ न्यायविहितः स्यादिति धानञ्जय्यः १३ एकान्नविंशे परिवर्त्तिनी पर्यायावभितस्त्रयोदशी मध्ये १४ तस्मिन् प्रथमायास्त्रिर्वचनं तथोत्तमायाः १५ पञ्चदश पर्यायावभितो नवी मध्ये त्रिकविष्टाव इति धानञ्जय्यः १६ शाण्डिल्यायनस्तु जातिसंहारम् १७ द्वात्रिंशे तिस्रो विष्टुतीः कुर्यादिति गौतमः १८ तासां पर्यायकृतिप्रयोगौ चतुश्चत्वारिंशेन व्याख्यातौ १९ अप्यहर्भाजि प्रथमयैवेति शाण्डिल्यः २०
इति षष्ठस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

चतुष्टोमयोश्चतुष्पर्यायाः १ तत्र चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मायतनीयां कुर्यात् २ मध्यमायां क्षत्रायतनीयाञ्चेत् ३ तथाष्टिनि द्विकास्तु तस्य पर्यायाः ४ पूर्वयोः पूर्व उत्तरयोरुत्तर एवं विहितावपराविति शाण्डिल्यः ५ पूर्वयोर्द्वितीयः पृथक्स्तोत्रीयास्वितर इति धानञ्जय्यः ६ द्वादशे व्याख्यातौ प्रथमोत्तमौ मध्यमौ द्विकौ पूर्वयोः पूर्व उत्तरयोरुत्तरः ७ षोडशे चत्वारो द्वादशपर्यायास्तेषां मध्यमौ सदृशौ ८ चतुर्विंशे चत्वारः षट्काः पर्याया द्विकविष्टावाः

९ पृथक्तृचेषु पर्यायाः स्युः १० द्वयोर्द्वयोर्वा व्यत्यासम् ११ यज्ञायज्ञीयर्चु वा प्रथमः प्रथमासु च यज्ञायज्ञीयप्रथमायाꣳसाकमश्वर्चु परमध्यमयोश्च द्वितीयः पूर्वयोश्च मध्यमयोर्हारिवर्णर्चु तैरश्चयोत्तमायाञ्च तृतीयः पूर्वेषाञ्चोत्तमासु तैरश्चयर्चु चान्त्यः १२ उपोत्तमो वा द्विकविष्टावोऽश्वमेधेऽष्टादशादितरे १३ पञ्चदशपर्यायौ पूर्वावेकविꣳशस्योत्तराविति वोत्तराविति वा १४

इति षष्ठस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

छन्दोदैवतसामान्तयोगान्नयाय्यान् ब्रुवते यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य १ उक्थोत्तमेऽनुष्टभो न्याय्याः २ विछन्दसस्तु वचनात् ३ यद्देवत्यासु स्तुवते सा स्तोत्रदेवता ४ अन्वध्यायमपवादनिशामनम् ५ स्वाराणि हाइकारस्वारपदानुस्वाराणि ६ तेभ्योऽन्यान्यैडवाङ्गिनधनेभ्यश्च निधनवन्ति ७ सर्वेषां तुल्यसन्निपाते जामि वाचोऽन्यत्र ८ तन्न कुर्यादनादेशे ९ दशरात्रात् षाडहिकान्यष्टमनवमयोश्चैतान्यहीनतन्त्राणि १० ज्योतिषश्च गोश्चैकाहिके ११ कल्पसप्रायाण्यृक्सामानि यत्र समवयन्ति तदाशीस्तन्त्रं यथाभिचरणीयेषु १२ भूयिष्ठं तन्त्रलक्षणम् १३ उत्तरयोः सवनमुखीये गायत्र्याविति शौचिवृक्षिः १४ मध्यन्दिनीयान्वाचार्य्याणाम् १५ द्विरात्रप्रभृतिष्वहीनेषु प्राक् षडहेभ्य उत्तममुत्तमैकाहिकमिति राणायनीपुत्रः १६ सर्वाण्याहीनिकानीति वैयाघ्रपद्यः १७ अहीनैकाहसमासन्तु लामकायनः १८

इति षष्ठस्य नवमी कण्डिका

## अथ दशमी कण्डिका

अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम् १ चतुरक्षरः पूर्वे वारवन्तीये २ तथा वाजभृति ३ कार्णश्रवसाजिगसुरूपाणाञ्च ४ पदं वाजिगप्रभृतीनाम् ५ स्तोमान्त आभीशवयोः ६ अभ्यस्तेनोत्तरस्य

७ वाग्वाम्रे ८ हाउकारश्चयावने ९ षोडशाक्षरो नानदस्य १० तथा गोशृङ्गसञ्जययोर्यच्च रात्र्यां दैवोदासम् ११ षट्त्रिंशदक्षरर्षभस्य रैवतस्य १२ सर्वेषामोङ्कारेणोद्गीथादानम् १३ प्रथमाक्षरलोपन्तु धानञ्जय्यः १४ अलोपं शाण्डिल्यः १५ स्वरादिषु तमेव स्वरमोङ्कारी कुर्यादागन्तुमोङ्कारं व्यञ्जनादिषु १६ सर्वत्र त्वेवागन्तुं दध्यात् १७ अग्रस्तमव्यस्तमविलम्बितमनम्बूकृतमुरसि प्रतिष्ठित-मदन्ताघातिनंशब्दमुच्चारयन्नुद्गायेदिति धानञ्जय्यः १८ प्रत्यक्षपरो-क्षाक्षिप्रचिरन्यस्तोदात्तकृष्टाकृष्टानां येन संस्वरेत्तत्कुर्यात् १९ सर्वन्तु लघीयसा २० अमात्रालोपेन २१ पदादिः प्रतिहारस्थानंसर्वत्र २२ पदाऽनिर्देशे चोत्तमे पदे २३ संख्याविषये चाक्षराधिकारः २४ अन्तःप्रतिहारंस्तोभान् प्रतिहर्त्ता ब्रूयात् २५ ऊर्ध्वञ्चार्चिकाव्यवेतान् २६ अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्यः २७ तस्मिन्नन्याय्य-समाज्ञा २८ पदान्तमविशेषेणोपोत्तमात्पदात्प्रतीयात् २९

इति षष्ठस्य दशमी कण्डिका

अथ एकादशी कण्डिका

एष न्यायोऽनादेशे १ सौमेधस्यौरार्णायवयोर्ऋषभस्य पावमानस्य ईनिधनस्य मार्गीयवस्यैतेषामुपरिष्टात्प्रतिहारस्योद्गाता स्तोभं ब्रूयात् २ न्याय्यप्रतिहाराणामिडासंक्षाराश्वसूक्तैडस्वरवार्षाहरस्वारकौत्सानां गोराङ्गिरसस्य साम्नोऽभ्यासवतश्च क्रौञ्चस्याग्निमीयामस्यैतेषां पुरस्तात् प्रतिहर्त्ता ३ संहितमार्षभंशाकलं वाजदावर्यःस्वारंसैमित्रं पदनिधने काण्वरोहितकूलीये यौक्ताश्वसौबरर्णानामुत्तरे यौधाजय-न्नौधसमाष्कारनिधनं काण्वं यौक्तश्रुचन्तिरश्चीननिधनमायास्यमि-न्द्रस्य यशो वैप्लवमुत्तरंसफं प्रमंहिष्ठीयं दीर्घं पौष्कलमान्धीगवं वृहदाग्नेयंश्यावाश्वत्रैशोके तेषां द्वे ४ पुरस्तात्स्तोभो यौक्ताश्वयोः पूर्वस्य ५ श्यावाश्वत्रैशोकयोः पदान्तः ६ अस्तोभस्तु श्यावाश्वस्य ७ ओङ्कारादिस्तृतीयचतुर्थाभ्यां प्राग्घिङ्काराद्विशोविशीये ८ हिङ्का-रादिर्वा पञ्चमषष्ठाभ्याम् ९

इति षष्ठस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

शौक्तिनार्मेधे द्विप्रतिहारे १ प्रथमनवमाभ्याᳪ शौक्तस्य २ पदान्तश्चतुर्भिः पूर्वो नार्मेधस्य चतुर्भिरेव मध्यमैरुत्तरः ३ एकप्रतिहारं वोत्तरेण ४ भासवैरूपयोर्गायत्रीसाम्नोः पदान्तो द्वाभ्यां भासे चतुर्भिरुत्तरस्य ५ तृतीयेन पदेन यज्ञायज्ञीयनिधने सौहविषे ६ श्रायन्तीयवरुणसामद्वैगताञ्जसां दश ७ तेषां पूर्वयोः सर्वं पदं द्वे च पुनरुक्तस्य ८ द्वैगते पदान्तः ९ उपोत्तमस्य पदस्य पदादिरञ्जसः १० विशोविशीयप्रभृतीनां वा नवानामुत्तमस्य पदस्यादौ द्वे ११ हाइकारान्तो विशोविशीये १२ श्रायन्तीयवरुणसाम्नोरभ्यासादिः १३ वामदेव्यᳪ स्वारᳪ साकमश्वं पाष्ठौहन्निधनकामᳪ सत्रासाहीयं काक्षीवतं च्यावनं गायत्रीसामौशनं निधनवदैध्मवाहं तेषां पञ्चमषष्ठे विकल्पेते न्याय्येन विकल्पेते न्याय्येन १४

इति षष्ठस्य द्वादशी कण्डिका

इति षष्ठः प्रपाठकः समाप्तः

सप्तमः प्रपाठकः

अथ प्रथमा कण्डिका

गूर्दः सौमेधं माधुच्छन्दसमौदलᳪ सौश्रवसमुत्तरं वार्त्रतुरमृषभो रैवतः कौत्समौष्णिहमातीषादीयं क्रोशमोकोनिधनᳪ स्वारᳪ सामराजं मारुतमौष्णिहमाक्षारᳪ सुज्ञानᳪ हारिवर्णᳪ सांवर्त्तञ्जागतं वरुणसाममरुतां धेनुस्त्रौग्मतं तेषां चत्वारि १ अभ्यासो गूर्दस्य २ अभ्यासादिरुत्तरेषां त्रयाणाम् ३ उत्तमानि सौश्रवसेऽस्तोभानि ४ अष्टौ वा वार्त्रतुरे ५ पूर्वयोश्च न्याय्यः ६ मध्यमं वचनमृषभे ७ मध्यमान्युत्तरेषां पञ्चानाम् ८ प्राग्वाभ्यासादुत्तमानि कौत्से ९ प्रथमानि वा सामराजस्य सपुरस्तात्स्तोभः १० षड्वा पञ्चमप्रभृतीनि मारुते ११ आश्वरथन्तरयोः पञ्च १२ वैदन्वते चाभ्यासवत्युत्तमे तु पदान्तः १३ तस्यादौ वा द्वे उभयतःस्तोभे १४ तृतीयं वा १५ उभौ

वैकः १६

इति सप्तमस्य प्रथमा कण्डिका

अथ द्वितीया कण्डिका

आकूपारक्रौञ्चे गायत्रीसामनी देवातिथं गौषूक्तꣳ रौरवं द्विहिङ्कारं वामदेव्यमेकारान्तप्रस्तावं वैयश्वमरण्ये गेयꣳ शाक्वरवर्णꣳ सौभरं बार्हद्गिररायो वाजीये स्वारमैध्मवाहं गौशृङ्गꣳ हारायणं कौल्मल-बर्हिषे जनित्रमुत्तरं वैतहव्यमिहवद्वामदेव्यं प्रतीचीनेडङ्काशीतं वैष्णवं पूर्वꣳ श्यैतꣳ सञ्जयं तेषाꣳ षट् १ अस्तोभावुत्तमयोः २ प्रथम-तृतीययोरुभयतःस्तोभौ ३ प्रागौकारात्प्रथमे ४ हिङ्कारात्तृतीये ५ अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य ६ इहकारान्तऐध्मवाहे स्तोभः ७ सर्वो वा ८ प्रागोवायास्त्रिषूत्तरेषु ९ पैरुमद्रे च १० ओकाराज्जनित्रे ११ सह वौवया पौरुमद्रे १२ गौशृङ्गहारायणकौल्मलबर्हिषवैत-हव्यानां वा पदान्तः १३ द्वाभ्यां पूर्वयोश्चतुर्भिरुत्तरयोः १४ पुरस्ता-त्स्तोभः कौल्मलबर्हिषस्य १५

इति सप्तमस्य द्वितीया कण्डिका

अथ तृतीया कण्डिका

सप्त वारवन्तीये पूर्वस्मिन् १ तेषां त्रीणि पदान्ते २ कार्णश्रवसं त्रैतं पज्रन्तौरश्रवसमुत्तरꣳ श्रुध्यमुद्वꣳशपुत्रः शाक्वरन्तेषामष्टौ ३ पज्रतौ-रश्रवसयोरर्धानि पदान्ते ४ श्रुध्यस्य च ककुप्सु ५ तस्य गायत्रीषु चत्वारि ६ षोडशबृहतीषु ७ नदम्बऔदतीनामिति दश ८ मध्यमस्य पदस्याभ्यासः शाक्वरे ९ न्याय्यो वा १० वायोरभिक्रन्द-स्वारङ्कावमौरुक्षयमौशनश्यावाश्वे त्रैष्टुभꣳश्नौष्टं जागतꣳ सोमसाम कार्त्तयशꣳ स्वरं पयोनिधनमृषभः शाक्वरो यण्वापत्ये तेषामुपोत्तमं पदम् ११ पुरस्तात्स्तोभा उत्तमानां त्रयाणाम् १२ अप्रतिहारा प्रथमा स्तोत्रीया यण्वापत्ययोः १३ पञ्चानां वादित उत्तमे पदे चत्वारि १४ वैखानसं पौरुहन्मनमुद्वꣳशीयमाकारणिधनन्त्वाष्ट्रीसाम तेषामुत्तमं

पदं प्रागभ्यासात् १५ अभ्यासे वा चत्वार्युत्तरयोः १६
इति सप्तमस्य तृतीया कण्डिका

अथ चतुर्थी कण्डिका

शाक्त्यसाम मैधातिथं वारवन्तीयमुत्तरमाभीशवे सिमानां निषेध-स्त्रिणिधने त्वाष्ट्रीसामायास्येदार्ढच्युतमाथर्वणं रेवत्य ऐटतमग्ने-स्त्रिणिधनमुत्सेधनिषेधावैडꣳसाकमश्वन्दैर्घश्रवसन्दासस्यत्यं ग्रामे गेयश्येनस्तानि द्विप्रतिहाराणि १ मध्यमयोः पदयोः शाक्त्यसाम-मैधातिथयोः पदान्तो द्वाभ्याञ्चतुर्भिर्वा २ इकाराद्यन्तौ स्तोभौ वार-वन्तीये ३ सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः ४ उकारादिर्वैकेन पदान्तः ५ न्याय्यो वा ६ पूर्वयोश्च ७ वारवन्तीयस्य द्विपदासु सप्तानाꣳ स्थाने चत्वारि द्वे चतुर्णाम् ८ द्वे एकमित्येकपदायाम् ९ उत्तरयोः पदयोरुत्तरेषाम् १० द्वे द्वे तु षण्णामाभीषवप्रभृतीनाम् ११ चत्वारि वा सिमानां निषेधस्य १२ त्वाष्ट्रीसाम्नश्च १३ सपुर-स्तात्स्तोभावाथर्वणस्य १४ तत्प्रभृतीनां चत्वारि १५ अष्टौ वा दाशस्यत्ये १६ पूर्वेवोत्तरेणैकप्रतिहारे १७ तृतीयपञ्चमाभ्यां पदा-भ्याꣳ श्येने १८ चतुर्थषष्ठयोर्वा पदयोर्द्वे पदयोर्द्वे १९
इति सप्तमस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

पृथक्स्तोत्रीयासु प्रतिहाराः सन्तनिनः १ त्रयस्त्रयऊधःसु महानाम्नी-नाम् २ तथा स्वराश्च नित्यवत्सातीषङ्गयोः ३ द्वे द्वे सर्वेषाम् ४ षड् वा शाक्वरोत्तमेषु महानाम्नीनाम् ५ षष्ठमध्यासेषु ६ मध्यमं वचनꣳ स्तौभिकं पुरीषेषु ७ अप्रतिहाराण्येकेऽध्यासपुरीषाणि ८ तासां प्रथमद्वितीये पदे द्विपदास्त्रीणि शाक्वराणि धातुर्वत्सऊध-स्तच्छाक्वरं पुरुषस्त्रीणि शाक्वराण्यध्यास्येति पदानि ९ उत्तमा तु द्व्यध्यासा द्विपदासु प्रस्तावः शाक्वरप्रथमेष्वध्यासपुरीषेषु च ११ भासेनोक्तः पदान्तो यज्ञायज्ञीयेदेवस्थाने वैरूपेण १२ अरण्ये गेयः

श्येनः पार्थुरश्ममछिद्ररयिष्ठे तेषामुत्तरेषु पदेषु द्वे द्वे पूर्वयोश्चत्वारि चत्वार्युत्तरयोः १३ उभयतःस्तोभाः पार्थुरश्मस्य १४ देवतापदं देवतापदमिति वैरूपे निधनानि १५ प्राक् शिशुमत्याः स्तोभैः प्रतिहारः १६ ऐकादशमैडेदैवोदासे १७ सप्तमाष्टमाभ्यामभ्यसेत् त्रैककुभस्य १८ नवमदशमाभ्यां वैश्वमनसस्य १९ तथा वृष्णस्त्रि-रुक्ताभ्यान्तु तस्य २० सदृशगीतिषु सर्वेषु पदेषु पृथक्पदानि भजेरन् प्रत्यन्तादनादेशे शेषमुद्गाता तानि विभाग्यानि २१ आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेद्योयः पदं ब्रूयात् २२ तथानुपदꣳस्तुब्धेषु २३

इति सप्तमस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

ऊर्द्ध्वन्तु प्रथमात्पदात्संकृतिनः १ प्राक्चतुर्थात्पदात्स्तोभैः प्रतिहारः २ निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभ-विभाग्यानि ३ तत्र तृतीयायैव पदाय प्रतिहर्त्ता स्तोभेत् ४ उपायवन्तः स्तोभा एकवृषस्य ५ देवतासु चर्षभस्य शाक्वरस्य ६ तासां नाना स्तोभेत्पदेभ्यः ७ गायत्रीसामसु विभाग्येषूत्तमं व्यावर्गꣳ शिष्ट्वा प्रतिहरेदिति धानञ्जय्यः ८ सर्वेणैव पदेनेति शाण्डिल्यायनः ९ त्रिरुक्तꣳस्तोभान् छुक्रियेषु चतुर्ब्रूयुरन्यत्र निधनेभ्यः १० महादिवा-कीर्त्यस्य प्रास्ताविके देवते विपरिहरेत् ११ तस्यात्मा स्तोभविभाग्यः १२ प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च १३ इतराण्य-नुगानान्युद्गातैव ब्रूयात् १४ तेषां निधनेष्वेनमनूपेयाताम् १५ उत्त-मानि वा त्रीण्यनुगानानि प्रत्याहृत्येतरैः सहात्मपदेभ्यः स्तोभ-धर्मेणानुसंहरेयुः १६ यानि पुरस्तादात्मनस्तानि सकृत्स्तोत्रादौ या-न्यूर्द्ध्वन्तानि सकृत्स्तोत्रान्ते १७ पर्यायादिपर्यायान्तयोर्वा १८ भा-सनिधने दशमस्य पदस्योपायमुद्गातैव ब्रूयात् १९ सर्वाणि राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः २० तस्यानुपदꣳस्तोभाः पदेन प्रस्तावः २१ तृतीयेन पदेन पुरस्तात्स्तोभेन प्रतिहारः २२ विभाग्यं वा २३ तत्र देवताभ्यो यद्यदनन्तरं पूर्वं पदन्तेन सहैना ब्रूयुः २४ व्यवस्तोभे-

त्पददैवतमित्येके २५ यथाधीतं वा २६

इति सप्तमस्य षष्ठी कण्डिका

अथ सप्तमी कण्डिका

निधनानि पदानि पदस्तोभेषु तथेडाः १ तेभ्यो नाना स्तोभेयुः २ त्रिभ्यः प्रथमेभ्यः प्रस्तोता ३ त्रिभ्य एव सप्तमप्रभृतिभ्यः प्रतिहर्त्ता ४ अर्द्धपदं निधनमिडाव्यवेतेषु ५ सर्वमव्यवेतेषु ६ चतुर्थस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि ७ तथा तृतीयः ८ द्वितीयोत्तमौ वा द्वैधञ्चतुरक्षरश इतरौ ९ अविभाग्या वा १० अष्टमैः स्तोभैः प्रथमस्य नवमैर्मध्यमयोर्दशमैरुत्तमस्य नवमैर्वा ११ इलान्दस्योत्तमेऽनुगाने षट् १२ विभाग्यानीतराणि १३ प्रथमं वा विभाग्यम् १४ तत्रोत्तमस्य स्तोभस्य मध्यमेन वचनेन १५ एकादश दैर्घतमसस्य १६ अष्टमैः स्तोभैर्भद्रश्रेयसोः १७ पञ्चमैश्च यदि द्विप्रतिहारे १८ पञ्चाक्षरशः स्तोभविभाग्ये धर्मविधर्मणी १९ द्विपदाकारं वा २० तयोर्दशमेन स्तोभेन प्रतिहारः २१ षष्ठेन च यदि द्विप्रतिहारे २२ पदान्ते त्रीणि सौहविषे २३ पदादौ वा २४ मध्यमं वचनꣳ स्वर्वन्निधने सौहविषे २५ विभाग्यं वा २६ मध्यममेव वचनं पुरस्तात्स्तोभं वैराजस्य २७ तस्य पदान्ताꣳश्चतुरभ्यस्येयुस्त्रिर्वा २८ तथा चातुर्थिकस्य वात्सप्रस्य २९ समाधिस्तु ३० अविभाग्यानामुत्तमे पदे प्रागुपायात् षट्सु व्यावर्गवत्स्वष्टसु वा यथा वामदेव्यक्रोशे पूर्वेण व्यावर्गेण प्रतिहरे-दिति धानञ्जय्यः ३१ उत्तरेणेति शाण्डिल्यायनः ३२ प्रतिहारिक-मेव गीतं प्रतिहारो वैछन्दसेष्वप्यपदादौ ३३ नाद्धूर्वं प्रतिहारादोङ्का-रेणाददीतेति धानञ्जय्यः ३४

इति सप्तमस्य सप्तमी कण्डिका

अथ अष्टमी कण्डिका

प्रत्यवेतस्वराणान्तु प्रत्युद्गृह्णीयात् १ यथा कालेयस्य नका३३३३३-रिणाम् यथा वात्सस्य मयो३३३३वा३ २ ओङ्कारेण प्रत्यवेत-

स्वराणामाददीतेति गौतमः ३ यथाम्नायᳪं शाण्डिल्यः ४ इहकार-इडाथकारौ गीतञ्च निधनस्वरᳪंहीषीस्वरञ्च द्व्यक्षरं देवताश्चारण्ये गेयेषु तान्यन्तःसामनिधनानि वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्तात् वृद्धः कृष्टो वा कारः स्वरितं वार्चिकं वा वृद्धं पूर्वेषां त्रयाणां यथा रेवत्यस्त्वाष्ट्रीसाम यौधाजयं दार्ढच्युतमाथर्वणमान्धीगवमिहवद्वा-मदेव्यम् ५ तेभ्यो यन्निगदवृत्त्यनन्तरमार्चिकन्तेन सहोपेयुरनादेशे ६ पुरीषेष्वार्चिकं प्रस्तावात् ७ क्रौञ्चे परिस्वारः ८ इहवद्वामदेव्ये पराविहकारौ ९ निषेधे चोभौ १० त्रिणिधने त्वाष्ट्रीसाम्न्युपग्रहादीनि ११ इलान्दानुगानतृतीय इहकारे विकल्पः १२ आतीषादीये च मध्ये निधने १३ पौरुमीढे मध्ये निधनं न १४ आष्टादᳪंष्ट्रसदो-विशीयार्कपुष्पेषु च १५ इकारादिमिडाᳪंसर्वउपेयुस्तानि प्रतीची-नेडानि १६ उकारन्त्वन्या गौतमः १७ इडेति धानञ्जय्यः १८ इकारान्तञ्चैवोपायᳪं संप्रगायन्ति कुत्सा एवं नः कृत्स्नेडोपेता भविष्यतीति प्रत्युद्गीतस्तु खल्वेषां तथोद्गाता भवति १९

इति सप्तमस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे १ तयोर्द्व्यक्षरः प्रस्तावः सर्वत्र २ तृचेषु त्वक्षरसᳪंसङ्गेन ३ प्रथमाया उत्तममक्षरं मध्यमायाश्च प्रथमम् ४ एवमेवापरे द्वितीयोत्तमयोः ५ प्रस्तावप्रतिहारणिधनानामक्षरपरिमाणᳪं सर्वत्र यथायोनि चिकी-र्षेद्वैछन्दसेष्वनादेशे ६ यस्यार्चिकमुदात्तानुदात्तं तदृगूढमथ यस्य सामिकं तत् सामोढं यथा पौष्कलस्योत्तरयोर्यथा३३३विदे३३-समा३३३प्सुजी३३दिति धानञ्जय्यस्तदृगूढं यथाविदे२३१११समा-प्सु३जी२३११दिति शाण्डिल्यस्तत्सामोढम् ७ ऊनाक्षरेषु पादेष्व-क्षरोपधिᳪं शाण्डिल्यो यथाग्नेस्त्रिणिधनस्या३नू३पे२३३३गो३मा३-न्गोभिरा३३३उवा३३३आ३३३क्षा३सो३मो३दू२३३३ग्धाभिरा३३३उवा३ ३३आ२३क्षा३स्तदक्षरसधातु ८ अनुपधिन्धानञ्जय्यः ९ आ३नू-

प३३३३गो३मा३न्गोभिरा३उवा३ह्ना३३३३सोमो३दू३३३३ग्धाभिराउवा ३३३ह्ना२३१११स्तत्पदसधातु १० पाङ्क्स्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेद्यथर्षभस्य शाक्वरस्य चतुरक्षरशः ११ तृतीयं यथा सङ्कृतिनो वृहतीष्वष्टाक्षरं चतुरक्षरञ्च १२ योनौ यान्यभ्यासेनान्यछन्दः सम्पद्यते यथा गौरीवितौदले कौत्सं त्रैककुभवैखानसे तदापन्नेषु गौतम-सार्दागवावनभ्यासम् १३ मशको गार्ग्योऽभ्यासं मशको गार्ग्यो-ऽभ्यासम् १४

इति सप्तमस्य नवमी कण्डिका

## अथ दशमी कण्डिका

उपास्थानेष्वन्यानि निधनानि १ स्वरानादेशे तथास्वराणि स्युः २ इडा चानादेशे ३ अध्यर्द्धा त्वध्यैर्द्धौपानाम् ४ औत्पत्तिकः स्वरः ५ स्वःकाशीते ६ दैवोदाससुज्ञानयोश्च ७ स्वःपृष्ठे च पूर्वः ८ उत्तर इति गौतमधानञ्जय्यौ ९ औपगवयोरथामथा वा १० कामन्तु नानाभिचरणीयेषु वा मथाथान्यत्र ११ जागतस्य सोमसाम्न इन्द्र इव दस्यूᳫं रमृणा २३१११ः सूर्य इव दस्यूᳫं रमृणा २३१११ वज्रिन् सुवज्री२३१११ निन्द्रइव दस्यूᳫं रमृणा २३१११ः सूर्य इव दस्यूᳫं रमृणो वज्रिन् सुवज्री२३१११नितिवेन्द्र इव दस्यूᳫंरमृणाः सूर्यइव दस्यूᳫंरमृणा २३१११वज्रिन् सुवज्री२३१११ निति वेन्द्र इव दस्यूᳫंरमृणाः सूर्य्य इव दस्यूᳫं वमृणो वज्रिन् सुवज्री २३१११ निति वा १२ कार्त्तयशे त्रयो विकल्पादयिन्नवे ३३ हᳫं ३३ दयिन्नवे ३३३ हᳫं ३३ दयिन्नवे हᳫं २३१११ १३ एवमेवोत्तरस्मिन्निधने १४ गायत्रस्य पदेन प्रस्तावः सर्वत्र १५ अष्टाक्षरेणेति धानञ्जय्यः १६ तथा पुराणं ताण्डम् १७ तस्य निदर्शनार्थं गानं गायत्रीषु १८ उपास्मै गायता नरो ३ मिति धानञ्जय्य उपास्मै गायता नरो ३ इति शाण्डिल्य उपास्मै गायता नरा ३ इत्येके १९ शेषमुद्गाता मनसा तु स्वभक्तिमोङ्कारं तथा स्वरं वाचा गायेत् २० पा३वमानायेन्दा३वा३३इत्येकावृदभि-देवाᳫं इया३इत्यपराक्षा ३त इत्यपरा २१ पूर्वावावर्गाववनर्दाविति

धानञ्जय्यः २२ मध्यमायामावृति द्व स्तोभौ कुर्यात्तावनवर्द्वाविति गौतमः २३ अभिदेवाꣳ इया ३३३३ इति २४

इति सप्तमस्य दशमी कण्डिका

अथ एकादशी कण्डिका

ज्यायसि छन्दसि प्रथमायामावृत्त्यावपेदुत्तमं पदं शिष्ट्वा १ अष्टाक्षरमिति धानञ्जय्यः २ ऊर्द्ध्वं रेतस्याया द्व्यक्षरꣳ शिष्ट्वा हिङ्कारं ब्रूयाद्धुं ३ आ३३ इति ३ तꣳ रेतस्यायां प्रतिहर्त्ता मनसा ध्यायेन्न परास्विति गौतमः ४ परास्वेवेति धानञ्जय्यशाण्डिल्यौ ५ रथन्तरवर्णायां चत्वार्य्यक्षराण्यभिष्टोभेद्भाभा इति शाण्डिल्य भभ इति धानञ्जय्यस्त्र्यक्षरञ्चाभिष्टोभेत् प्रथमꣳ ह्यक्षरं लुप्तमिति ६ हुं ३३ इति हिङ्कारः ७ द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि ८ सर्वत्र चत्वारीति शाण्डिल्यो यथर्चं चान्तं ब्रूयात् ९ क्षा ३ ता ३ इवा ३ यू ३ इति १० आकारं त्वाचार्य्यास्तं दीर्घम् ११ अवस्वरेदिति धानञ्जय्यः क्षा३ तो३ आ३१११ १२ क्षातो वा इति गौतमः १३ क्षातो वा इत्येके १४ काम्यानां निधनानां किञ्चिच्चिकीर्षन्नुत्तमस्य द्व्यक्षरस्य स्थाने कुर्य्यादिति गौतमः १५ अभिदेवाꣳ इयक्षता ३३३३ इति वा सर्वा-मृचं समाप्य १६ अविकारेण सर्वं गीत्वेति धानञ्जय्यस्तान्याकार-स्थानेषु स्युर्निधनत्वेन हि चोद्यन्ते १७ अकृतलक्षणचोदनाच्चौत्पत्ति-कस्वराणि १८ कृतस्वरन्तु निधनं तस्य चोद्यते वर्णविकारो यथा रथन्तरस्य गायत्र्यः १९ तानि सर्वत्र स्युरनारभ्योत्पत्तित्वाद्गायत्रस्य २० बहिष्पवमान इत्येके तद्धि विकारा नातिक्रामन्ति यथा रेतस्या रथन्तरवर्णे धुराञ्च सामान्ताः २१ बहिष्पवमानसंयोगस्तु तेषां न कामसंयोगः २२

इति सप्तमस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

गीतिविकारो गायत्रस्य धुरः ॥१॥ स्तोत्रीयानुरूपयोर्ज्योतिष्टोमस्या-

ज्येषु च नान्यत्र ॥२॥ रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवति पा३३२ वा३३२ मानायेन्दा ३ वा ३३२ इ ॥३॥ गायत्र्युत्तरा तस्या द्वे त्र्यक्षरे समायनी व्यतिषजतीति ब्राह्मणं भवति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथममाथर्वाणी अशिश्रादे३३२ युर्वन्देवा यदा ३३३३३ ॥४॥ त्रिष्टुवुत्तरा तां बलवदिवोरसेव गायन्तीति ब्राह्मणं भवति शां ३३२ जा ३३२ ना ३३२ य शमर्वा ३ ता ३ इशꣳ रा ३३ जा ३३ नो ३३२३३ षा ३ धा ३३३३३ ॥५॥ उत्तमार्द्धे द्वे अक्षरे द्योतयतीति ब्राह्मणं भवति ॥६॥ ये ऊद्ध्वं हिङ्कारात्ते निर्ब्रूयादिति गौतमः ॥७॥ षाधा इति धानञ्जय्यः ॥८॥ जगत्युत्तरा तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्य इति ब्राह्मणं भवति पा३रिष्टोभा २३३ न्ता३३ या कृपा३३२सो३ माः शुक्रा३३२ गा ३ वा ३३३३३ ॥९॥ उत्तमार्द्धे चत्वार्यक्षराणि द्योतयतीति ब्राह्मणं भवति ॥१०॥ द्वे पुरस्ताद्धिङ्कारात्तथोपरिष्टादिति गौतमः ॥११॥ सोमाः शुक्रा इति धानञ्जय्यः ॥१२॥ अनुष्टुबुत्तरा तान्निनर्दन्निव गायतीति ब्राह्मणं भवत्या३ वाजं वाज्यक्रमी३३३३३त् सीदन्तो वां३३३३३नुषा ३३३३३ ॥१३॥ निरुक्ताश्चानिरुक्ताश्च गायतीति ब्राह्मणं भवति १४

इति सप्तमस्य द्वादशी कण्डिका

अथ त्रयोदशी कण्डिका

समस्तब्राह्मणं धुरां मन्य इति गौतमस्त्रिष्टुब्जगत्योर्ह्यक्षराणि निराहेति १ एतस्या एवेति धानञ्जय्यशाण्डिल्यौ २ तस्या द्वितीयं पदं निर्ब्रूयात्तृतीये चाक्षरे पञ्चमषष्ठे ३ पङ्क्तिरुत्तरा ॥४॥ तस्या द्वे द्वे अक्षरे उदासङ्गायत्त्याषड्भ्योऽक्षरेभ्य इति ब्राह्मणं भवति संजा३१ ग्मानो३ दा३ इवा३ ॥५॥ का३ वा३ इति धानञ्जय्यः क वा३ इति शाण्डिल्यः ॥६॥ सदिति रेतस्याया निधनꣳ समिति गायत्र्याः स्वरिति त्रिष्टुभ इडेति जगत्या वागित्यनुष्टुभः ॥७॥ तेषामुक्तोन्यायः काम्यैः सामान्तैः ८ न तूद्ध्वं बहिष्पवमानात्स्युः ९ जगतीं गायत्रीं त्रिष्टुबनुष्टुभाविति

पृथगाज्यप्रथमासु गायेत् तत्पुराणं यथाज्यगानम् १० गायत्रीत्रिष्टु-भोर्व्यतिक्रमं धानञ्जय्यः ११ गायत्रीं मैत्रावरुणस्याज्यप्रथमायां होतु-रितरा आदितस्तत्पुराणँ होतुराज्यगानम् १२ त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्याएव द्वितीयायामृच्यनुष्टुभं गायेदिति धानञ्जय्यो गायेदि-ति धानञ्जय्यः १३

इति सप्तमस्य त्रयोदशी कण्डिका

इति सप्तमः प्रपाठकः समाप्तः

## अष्टमः प्रपाठकः

### अथ प्रथमा कण्डिका

उदगयनपूर्वपक्षपुण्याहसन्निपाते यज्ञकालोऽनादेशे १ संख्यामात्रे च दक्षिणा गावः २ हिरण्यमिति जातरूपं प्रतीयात् ३ प्रथमायां पूर्व-पक्षस्य दीक्षेतैकाहेभ्यः ४ दृष्ट्वा वा नक्षत्रयोगम् ५ तेषामेका दीक्षानादेशे तिस्रश्चतस्रोऽपरिमिता वा ६ तिस्र उपसदः ७ ज्योतिष्टोमस्योक्थानामुत्तरे सौभरनार्मेध अतिरात्र उक्थान्त इतराणीति गौतमो वृत्तिग्रहणात् ८ अनियोगमितरेषां धानञ्जय्योऽविशेषाम्नानात् ९ इतराण्यप्यतिरात्र इति शाण्डिल्यस्तुल्यचोदनात् १० आष्टादंष्ट्रयो-र्विकल्पः स्यात् ११ काम्यानुक्थछन्दोयोगानतिरात्रस्य मन्यन्ते सौभर-नार्मेधप्रमाणाः १२ वृत्तिस्त्वनुष्टुभां रात्र्युपायेन विद्यते १३ दृश्यते चान्यत्र रात्र्युपायान्नार्मेधं यथाभिप्लवस्य पञ्चाहे १४ तस्यानुष्टुभः स्तोत्रीयः स्यादुक्थान्तेषु वैच्छन्दसोऽतिरात्रेषु वृत्तिविभागात् १५ स्वतन्त्रस्य ज्योतिष्टोमस्य सँस्थाविकल्पा आग्निष्टोम्यमुकथ्यता-तिरात्र्यमिति १६ तस्यानतिरात्रस्य द्वादशँ शतं दक्षिणाः १७ गोआयुषोश्च १८ विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्वापराभ्यां यजेतेति धानञ्जय्यः १९ युगपदिति शाण्डिल्यः २० अभिजितो दक्षिणं देवयजनँ स्याद्विश्वजित उत्तरम् २१ तत्प्रति पत्नीशाला स्यात् २२ नानर्त्विजो यच्चान्तर्वेदि कर्म २३ अथ यद्बहिर्वेद्येकन्तत् २४ अभिजितः पूर्वं पूर्वं कर्म सन्तिष्ठेत विश्वजित उत्तरम् २५ तयोः पृथक्

सहस्रे दक्षिणाः २६ कामं त्वयमाभ्यां यजेत २७ सहस्रमभिजिति दक्षिणाः शताश्वꣳ सहस्रꣳ सर्ववेदसं वा विश्वजिति २८

इति अष्टमस्य प्रथमा कण्डिका

अथ द्वितीया कण्डिका

तस्यावभृथादुदेत्य रोहिणीं वत्सच्छवीं परिधाय धर्मान् कुर्य्यात्त उक्ता ब्राह्मणेन १ अरण्ये तिस्रो वसतीत्युदुम्बरे वसेत् २ उदुम्बराभावे-ऽप्युदुम्बरशाखां निखनेयुः ३ खनित्रेण जीवतीति यत्तत्र खान्यꣳ स्यात्तेन जीवेत् ४ खान्याभावे धान्यपात्रान्निखाय तैरुत्खानं जीवेत् ५ उभयतःक्ष्णुदभ्रिर्भवतीति वैणवी कल्माषीति शाण्डिल्यः ६ या का चेति धानञ्जय्यः ७ निषादेषु तिस्रो वसतीति पार्श्वतो निषाद-ग्रामस्य वसेत् ८ तेषां काममारण्यं भुञ्जीत नैवारꣳ श्यामाकं मार्गमिति ९ जने तिस्रो वसतीति राजन्यबन्धुर्जनो ब्राह्मणः समानजन इति शाण्डिल्यः १० विवाह्यो जनः सगोत्रः समानजन इति धानञ्जय्यः ११ प्रतिवेशो जनपदो जनो यत्र वसेत् स समानजन इति शाण्डिल्यायनः १२ एते धर्माः सर्ववेदसदक्षिणानां सर्वेषाम् १३ व्रतवत्सु सर्वेष्वमावास्यायां दीक्षित्वोखामाबध्नीत सांवत्सरि-केभ्योऽन्यत्रेति गौतमः १४ सह सुत्याभिः षडहानि संवत्सराद-धिकानि कृत्वोत्तिष्ठेयुः १५ समाप्ते वा संवत्सरे रात्रिसत्रेषु राजानं क्रीणीयुः १६ यथाजाति तु प्रथमे पञ्चदशरात्रे दीक्षेरन् १७ सर्वत्र वा यथाजात्यन्यत्र चेदुपेतमिति धानञ्जय्यः १८ अनुपेतञ्चेदपीति शाण्डिल्यः १९ तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन २० षड्वा द्वादश वा २१ तत्र ब्रह्मणेऽश्वरथं शतञ्च दद्यात् २२ तथाग्निं चिन्वतेऽध्वर्यवे २३ पृष्ठेन च स्तुवानायोद्गात्रे २४ तच्चानुशꣳसते होत्रे २५ सर्वेभ्यः सहस्रम् २६ सर्ववेदसदक्षिणं वा २७ इतरच्छाण्डिलम् २८ सर्वे साहस्राः पृथक् सहस्रदक्षिणाः २९

इति अष्टमस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

साद्यःक्रेण यक्ष्यमाणो महारात्रेः प्रातराहुतिꣳ हुत्वाचक्षीतर्त्विग्भ्यः साद्यःक्रोम इति १ प्रग एव प्रहिणुयादिति धानञ्जय्यो दीक्षाप्रभृति सद्यः सर्वं कुर्य्युः प्रथमद्वितीययोः श्येनस्य च २ एकत्रिकान्ताः षट् साद्यःक्रा इति शौचिवृक्षिः ३ उर्वरा वेदिरिति प्रथमे यवोर्वरा पक्का स्याद्व्रीह्युर्वरा वा ४ तत एव समुत्कर्त्तं खल उत्तरवेदिं कुर्य्युः ५ खलेवाली यूपो भवतीति लाङ्गलेषा यूपः स्यात् कलापी चषालभागा ६ अतीतायाञ्चेद्यववेलायां ब्रीहिवेलायां वा यजेत धान्यपात्रानुप्त्वा-भिकृषेयुः ७ धान्यपात्रा उत्तरवेदिः स्यान्मूतश्चषालभागा ८ त्रिवत्सः साण्ड इति बहुत्रिवर्षस्य जानपदी त्रिवत्स इति ९ यो वा तिस्रो धयेत् १० त्रिवर्षो वैव स्यात् ११ प्राञ्चꣳ होतारं बहेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्य्युं दक्षिणा ब्रह्माणं पुरस्ताद्वात्र वसेयुस्तत्रैभ्यः सोमं प्रब्रूयुरश्वरथैर्यात्वा न उक्ता ब्राह्मणेनाध्वानश्च १२ कुर्य्युरेवर्त्विज इति शाण्डिल्योऽन्याꣳसु ब्राह्मणाꣳस्तानध्वन ऊढ्वा तत्रैभ्यः सोमं प्रव्रूयुरसौ सद्यः क्रिया यजते तदहं प्रव्रवीमीन्द्राय विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्य इति १३ स क्षीरदृतयोरथा भवन्तीति सद्यो दुग्धेन क्षीरेण दृतयः पूर्णाः स्युस्ततोऽयन्नवनीतमुदीयात् फेनो वा तदाज्येऽपि सृजेयुः १४ अश्वः श्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यात् किञ्चिच्चेतरेभ्यः १५

इति अष्टमस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

एतेनैवोत्तरो व्याख्यातः १ तस्याश्च एकविंशो दक्षिणानामतो वैव २ एकरात्रीणो द्व्यहीनोऽनुक्रीस्तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यामिति ह्याह ३ तस्य क्रयप्रभृत्युत्तमहः स्यादिति गौतमस्तꣳ सद्यः परिक्रीयेति ह्यादित्यानाह नेतरान् ४ अपरेद्युः क्रयणाच्चानुक्रीरित्याख्या ५ उपवसथान्तं पूर्वमहः स्यादिति धानञ्जय्यः श्वःसुत्यामिति ह्याहेति श्वः क्रयं प्राब्रुवन्नित्यभविष्यत् ६ तꣳ सद्यः परिक्रीयेति च प्रथमस्य

सद्यस्तां दर्शयति ७ द्व्यहीनत्वात्तु जघन्यतरेऽङ्गिरसोऽक्रीणꣳस्त-
स्मादनुक्रीरित्याख्या ८ तस्याश्व एकशततमो दक्षिणानामश्वो वैव ९
एतेनोक्तो विश्वजिच्छिल्पः १० द्विरात्रीणस्त्र्यहीन इति शाण्डिल्यः
११ दैक्षं प्रथममहःक्रयप्रभृत्युपवसथान्तं द्वितीयꣳ सौत्यमुत्तमम् १२
तस्य दक्षिणा यानानि यथोत्साहं दद्यात्तस्मिन् जनपदे यान्यभि-
ध्याततमानि स्युः १३ सर्ववेदसनिर्मान्दद्यादिति धानञ्जय्यो विमितꣳ
शयनमारोहणमहानसे दासमिथुनौ धान्यपल्यꣳ सीरं धेनुरिति
धेनुरिति १४

इति अष्टमस्य चतुर्थी कण्डका

अथ पञ्चमी कण्डका

व्रातीनानां यौधानां पुत्राननूचानानृत्विजो वृणीत श्येनस्य १
अर्हतामेवेति शाण्डिल्यः २ अभिवातासु या अनभिवाता स्युस्ता-
सामाज्यं मन्थयेत् ३ यत्र स्तम्बा वृक्षा वा बहुला जाताः
स्युस्ताꣳश्छेदन् देवयजनं कुर्युः ४ यद्वा विदाहि स्थण्डिलम् ५
शवनभ्ये अधिषवणे इति येन यानेन मृतं निर्वहेयुस्तस्य नभ्ये
अधिषवणफलके कुर्युः ६ अचषालो यूपस्स्याग्रः ७ लोहितोष्णीषा
लोहितवाससो निवीता ऋत्विजः प्रचरेयुरुपोतपरुषा उज्यधन्वानः ८
पवमाने रथन्तरं करोतीति बृहत्यामेकर्चानाꣳ स्थाने स्यादेकं तद्धि
बार्हतानाꣳ स्थानमेवञ्च तृचे भवति ९ अविप्रतिषेधेनेतरेषामनु-
कल्पयेदित्यपरमेवमल्पीयान् विकारः १० तत्र पञ्चमं वार्हतमाहरेत्
स्तोमवशेन तत् पौरुमद्गꣳ स्यात् भ्रातृव्यवधꣳ ह्यस्मिन् ब्राह्मणं
दर्शयति ११ पृष्ठेषु रथन्तरस्योत्तरयोर्द्विपदे स्यातामित्याचार्या एवं
सुपराच्यो भवन्तीति १२ ककुभाविति गौतमो नावृत्तिमेतत् स्तोमस्य
दर्शयतीति १३ प्लवं ब्रह्मसाम कुर्वन् श्यैतस्यर्क्षु कुर्य्यात् १४
वृत्तिर्ह्येतस्मिꣳ स्थाने पावमानीनां न विद्यते १५ नव नव दक्षिणा
इति नववर्गान्यथोत्साहं दद्यात् काणखोरकूटबण्डानाम् १६ तासा-
मपि दक्षिणावेलायां लोहितं जनयेयुः १७ एकत्रिके सद्यः सर्वं कुर्युः

१८ एकदीक्षस्त्र्युपसत्क इति गौतमः १९ तस्य गायत्रपार्श्वमार्भवोऽया रुचेति २० पुरोजित्यामिति शाण्डिल्यस्तस्याः स सुन्वे यो वसूनामित्येतां मध्ये कुर्यात् २१ प्राचीमनु प्रदिशं याति चेकितदित्येतस्यामुद्वꣳशीयं कुर्यादुद्धृत्य गायत्रपार्श्वमिति लामकायनः २२ त्रिकं वहिष्पवमानꣳ स्यादिति धानञ्जय्यः पञ्ची मध्यन्दिनः सप्तत्यार्भव एकीनीतराणीति २३ पवमानाश्च होतृषामाणि च त्रिकाण्येकीनीतराणीति २४ चतुरुत्तरसम्पन्नो द्वे द्वे त्रिकपञ्चिनी प्रत्यवरोहेण २५ तस्य षट्षष्ठं शतं दक्षिणाः २६

इति अष्टमस्य पञ्चमी कण्डिका

## अथ षष्ठी कण्डिका

व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय यज्ञोपकरणानि चेष्ट्वा य एषामध्ययनेऽभिक्रान्तितमः स्यादभिजनेन वा तदभावेऽपि भोगलाभेन तस्य गार्हपते दीक्षेरन् भक्षाꣳश्चानु भक्षयेयुः १ ये के च व्रात्याः सम्पादयेयुस्ते प्रथमेन यजेरन् २ ब्राह्मणेनेतर उक्ताः ३ स्थाविरादपेतप्रजनना ये ते शमनीचामेढ्राः ४ यन्निरुक्तं निधनमुपेयुरितीन्द्रेति द्यौताने निधनं निराहुस्तस्य प्रतिषेधः ५ यथाम्नायमेवोपेयुः ६ उष्णीषञ्च प्रतोदश्चेत्युष्णीषं यत्तिर्य्यङ्नद्धं भवति व्रात्यानाम् ७ धनुष्केणानिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्याह्नोडः ८ विपथश्च फलकास्तीर्ण इति प्राच्यरथो नास्तीर्णो विपथः ९ कम्प्रमिश्राभ्यामश्वाश्वतराभ्यां युक्तः स्यादिति शाण्डिल्यः १० याभ्यां काभ्याञ्चाश्वाभ्यामश्वतराभ्यां वेति धानञ्जय्यः ११ कृष्णशंवास इति कृष्णङ्कहमिश्रमिति शाण्डिल्यः १२ शुक्लं कृष्णदशमिति गौतमः १३ कृष्णमित्येव मन्य इति धानञ्जय्यः १४ यावविकौ द्वाभ्यामविभ्यामेकैकः क्रीतः स्यात्तयोः पार्श्वसꣳहिते कृष्णबलक्षे अजिने स्याताम् १५ बलक्षमिति श्वेताख्या १६ रजतो निष्कः १७ तद्गृहपतेरित्येतत् सर्वं गृहपतिराहरेत्त्रयस्त्रिꣳशतञ्च १८ द्वित्रयस्त्रिꣳशतमिति शाण्डिल्यः १९ वलूकान्तानि दामतूषाणीतरेषामित्याविकानि लोहितप्रवाणानि

वसनानि स्युः २० दामतूषाणीति दामदशानि स्युर्दशाख्या तूषमिति २१ द्वे द्वे दामनी इति द्वे द्वे एकैकस्य वसनस्य दशे स्याताम् २२ द्वे द्वे उपानहाविति कृष्णाः कर्णिन्य इति शाण्डिल्यः २३ याः काश्चेति धानञ्जय्यः २४ द्विषꣳहितान्यजिनानीति पूर्वाभ्यामजिनाभ्यां व्याख्यातानि २५ तच्चेतरेषामेकैक आहरेत्त्रयस्त्रिꣳशतं च त्रयस्त्रिꣳशता गृहपतिमभिसमा यन्तीति ह्याह २६ ते त्रयस्त्रिꣳशत ऋत्विग्भ्यो दद्युः २७ व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मागधदेशीयाय यस्मा एतद्ददति तस्मिन्नेव मृजानायन्तीति ह्याह २८ व्रात्यस्तोमैरिष्ट्वा त्रैविद्यवृत्तिꣳ समातिष्ठेयुः २९ तैषान्तत ऊर्द्ध्वं भुञ्जीतापि चैनान् कामं याजयेदिति ३०

इति अष्टमस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

अग्निष्टुत्स्वनडुहामश्वानामजानामिति यथोत्साहं दद्यात्तथा हिरण्यस्य १ कश्चिदर्थमर्हन्यो न प्राप्नुयात्स त्रिवृतां प्रथमेन यजेत २ तस्य चतुर्युगश्वरथो दक्षिणा तेषामेकः श्यावः स्यात् ३ यं ब्राह्मणाः स्वराजानः पुरस्कुर्वीरन् स वृहस्पतिसवेन यजेत ४ तस्य प्रातःसवने सन्नेषु नाराशꣳ सेष्वेकादश दक्षिणा व्यादिशेदृत्विग्भ्यो नापाकुर्यात् ५ अश्वद्वादशा मध्यन्दिने ६ ता उभयोरपाकरोति ७ एकादश तृतीयसवने ता अनुबन्ध्यवपायाꣳ हुतायामपाकुर्यात् ८ तान्यप्येकादशैकादशशतानि स्युः सहस्राणि वा नित्यस्त्वश्वो मध्यन्दिने ९ य एनं पुरस्कुर्वीरन्नन्वग्भूतवृत्तिं तत ऊर्द्ध्वं तेषु वर्त्तयेत् १० स्थपतिरिति चैनन्त आचक्षीरन् ११ श्येनेनेषुर्व्याख्यातो दीक्षोपसदस्त्वस्यैकाहिक्यः १२

इति अष्टमस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतेत यथा सौत्येऽहनि प्रेयामिति

१ प्राणभक्षꣳ सर्वत्र भक्षान् भक्षयेत् २ तानपोभ्यवहारयेत्कर्त्रे वा-नुषेचयेत् ३ सोममद्भिः सꣳसृज्य मार्जालीयसदेशे निनयेयुः ४ आर्भवे पवमाने स्तूयमान उदुम्बर्य्या दक्षिणा प्रावृतो निपद्येत कृष्णाजिनमुपस्तीर्य्य दक्षिणाशिरास्तदेव संगच्छते तदेव म्रियत इति ५ एतं मृतं यजमानꣳ हविर्भिः सहर्जीषेण यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरिति शाण्डिल्यः ६ समापयेयुः शेषमिति धानञ्जय्यः ७ समापयेयुश्चेदिति शाण्डिल्यायनो नेदिष्टी तत्कृष्णाजिनं प्रतिमुच्य याजमानं कुर्यात् भक्षाꣳश्च भक्षयेत् ८ ऋत्विजो याजमानं कुर्युः सर्वहुतो भक्षान् जुहुयुरिति धानञ्जय्यः ९ सꣳस्थितेऽहनि सन्त्वा हिन्वन्तीत्यासन्द्यङ्गानि समाहरेयुः १० सन्त्वा रिणन्तीति प्रक्षालयेयुः ११ सन्त्वा ततक्षुरिति तक्ष्णुयुः १२ सन्त्वा शिशन्तीति विवयेयुः १३ तनैनमवभृथꣳहृत्वा सोमोपनहनेन प्रछाद्यानूबन्ध्यवपायाꣳहु-तायां दक्षिणे वेद्यन्ते केशश्मश्रूण्यस्य वापयेयुः १४ अनूबन्ध्यशेषं समाप्य मध्ये देवयजनस्य चितां चिनुयुः १५ पश्चाद्गार्हपत्यमुपदध्युः पुरस्तादाहवनीयं पश्चिमेन गार्हपत्यं दक्षिणत आग्नीध्रीयं परिहरेयुः १६ तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पयेत् १७ शिरसि कपा-लानि युञ्ज्यात् १८ समोप्तधानञ्च चमसम् १९ ललाटे प्राशित्रहरणम् २० नासिकयोः स्रुवौ २१ आस्ये हिरण्यमवधायानुस्तरणिक्या गौर्मुखं वपया प्रच्छाद्य तत्राग्निहोत्रहवनीं तिरश्चीम् २२ दक्षिणे पाणौ जुहूम् २३ सव्य उपभृतम् २४ तथा वृक्कौ २५ उरसि ध्रुवाम् २६ उदरे पात्रीम् २७ उपस्थे कृष्णाजिनम् २८ अन्तरेण सक्थ्नी शम्या-दृषदुपले यच्च नादेक्ष्यामः २९ दक्षिणस्योरवस्य दक्षिणत उलूखलम् ३० अनुसक्थं मुषलम् ३१ पादयोः सूर्पम् ३२ सर्वाण्युत्तानानि पृषदाज्यवन्ति कृत्वा सर्वेभ्योऽग्निभ्य उलपराजीस्तृणुयुर्यथास्मिन्नग्नयः समवेष्यन्तीति ३३ आहवनीयाच्चेत्प्रथममेयात् ब्रह्मलोकमेष्यतीति विद्यात् गार्हपत्याद्देवलोकं दक्षिणाग्नेः पितृलोकम् ३४ क्लृप्तेषु यज्ञ-पात्रेषु त्रिश्छन्दोगः परिगायेत् नाके सुपर्णमिति ३५ धूम उदिते त्वेषस्ते धूम ऋण्वतीति ३६ प्रज्वलितेऽग्ने मृड महाम् असीत्येतयोरन्यतरेण

३७ एषैवावृत् सर्वाहिताग्नीनाम् ३८ जीवेच्चेत् यजेतोदवसानीयया ३९ अभोजनेन तत ऊर्द्ध्वं मुमूर्षेत् ४० भुञ्जीत जिजीविषेदेवेति धानञ्जय्यः ४१ तस्य कृतान्नन्दक्षिणा ४२ फाल्गुन्यां पौर्णमास्या-ञ्चातुर्मास्यान्यारभेत ४३ उक्तं कालान्तरं ब्राह्मणेन ४४ यजनीयेऽहनि वैश्वदेवशुनासीर्ये स्यातामुत्तरञ्च वारुणप्रघासिकम् ४५ पर्वण्युत्तमꣳ साकमेधानाम् ४६ द्वादशꣳशतꣳशुनासीर्यस्य दक्षिणाः ४७ पञ्चाशदितरेषामह्नामेकैकस्यैकैकस्य ४८

इति अष्टमस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थानासु १ प्रत्यक्षमस्वस्थानासु २ देवशब्दं सर्वत्र वर्जयेयुः ३ होता देवो मही मित्रस्येत्येते होता यज्ञे मही यज्ञस्येति ब्रूयुरिन्दुरिति सोमम् ४ अदिष्टादक्षिणा ब्राह्मणेन ५ इतरेभ्यश्च किञ्चिद्दद्यात् ६ ऋतपेये तस्य द्वादश दीक्षोपसद इति तिस्र उपसदः ७ घृतव्रतो भवतीति यथोत्साहं दीक्षासु प्राश्नीयात् ८ उत्तरेणोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्व-ङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादिति धानञ्जय्यः ९ एकाङ्गुल्या पृथक् पर्वभिः सर्वान्देशाꣳश्चमसा मिताः स्युस्तैरनुलोमैरिति शौचिवृक्षिः १० प्रतिलोमैरिति शाण्डिल्यः ११ ऋतमुक्त्वा प्रस-र्पन्तीति प्रस्रप्स्यतः सदो भक्षयिष्यन्तश्च देव सत्यानि ब्रूयुरियं भूमिरसावादित्य इति १२ या देवताश्चमसैरिज्येरꣳस्तत् पीतव-द्भक्षमन्त्रानूहेयुरिति शाण्डिल्यः १३ अविकारेण तु नाराशꣳसानाम् १४ सोमचमसो दक्षिणेत्यभिषुतस्य स्यात्तस्मिन्हि चमसं प्रमाणम् १५ तं मध्यन्दिने सवनमुखीयैः सहोन्नयेयुर्जुहुयुश्चास्य हुतो देय इति हि ब्राह्मणम् १६ तं दक्षिणावेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षि-णेन सदोहविर्द्धानानि हारयित्वा पूर्वया द्वारा सदः प्रवेशयेयुः १७ सꣳस्थितेऽहन्यृत्विग्भ्यः किञ्चिद्दद्यात् १८

इति अष्टमस्य नवमी कण्डिका

## अथ दशमी कण्डिका

आदिष्टा दक्षिणा ब्राह्मणेन दूणाशस्य १ एतावन्त्यष्टविंशतिशतमानानीति यत्र स्याच्चतुर्विंशतिमानानान्तावन्त्यष्टाविंशतिशतानि दद्यात् २ रुक्मो होतुरिति निष्को नामालङ्कारस्तं दद्यात् ३ स्रगुद्गातुरिति हिरण्मयी स्यात् ४ वैश्यस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रङ्कुर्युः प्रातःसवने शृतेन मध्यन्दिने दध्ना तृतीयसवने ५ तस्य द्वादशंशतं दक्षिणाः सहस्त्रं वा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते ६ तीव्रसुति सोमातिपवितं याजयेदिति ७ य इष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्यः ८ यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जय्यः ९ तत्र भक्षावृताश्चमसानवजिघ्रेयुरछावाकस्तोत्रेण स्तुत्वा भक्षयेयुरभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्ति तानछावाकस्य स्तोत्रे भक्षयन्तीति ह्याह १० एवंसर्वेषु सवनेषु ११ अभ्यभिसोमानुन्नयन्तीति यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः १२ शतमाशिरं दुहन्तीति धेनुशतं दोहयित्वा त्रैधं विभज्य सोमं मिश्रं कुर्युर्यथा वैश्यस्तोमे १३ तस्य तदेव धेनुशतं दक्षिणास्ता उ एव दक्षिणा इति ह्याह १४

इति अष्टमस्य दशमी कण्डिका

## अथ एकादशी कण्डिका

यं ब्राह्मणा राजानश्च पुरस्कुर्वीरन् स वाजपेयेन यजेत १ तस्य पौर्णमास्यां दीक्षित्वा त्रयोदश दीक्षाः स्युः २ सप्तदश वा ३ अमावास्यायां दीक्षित्वा मासमिति गौतमः ४ संवत्सरमिति धानञ्जय्यः षडुपसत्कश्च साग्निचित्यः स्यादिति ५ पार्ष्टिकान् स्तोमान् ज्योतिष्टोमतन्त्रे कल्पयित्वा तैर्ज्योतिष्टोमादिभिस्तद्व्यवेतैः संवत्सरं पूर्वपक्षेषु यजेत त्रयोदशे पूर्वपक्षे वाजपेयेनेष्ट्वैतैरेवावृत्तैरपरंसंवत्सरं ते यथोत्साहदक्षिणाः स्युः ६ राजसूयविधेन यजेतेति लामकायनः ७ त्रिवृत्पञ्चदशोऽभ्यारोहणीयस्य स्थाने स्यात् ८ वाजपेयोऽभिषेचनीयस्य ९ पञ्चदशत्रिवृत् केशवपनीयस्य १० व्युष्टिक्षत्रधृत्यो-

ज्योतिष्टोमौ ११ बृहस्पतिसवेनैव पुरस्तादुपरिष्टाच्च परियजेतेति धानञ्जय्यः १२ मासमात्रे पुरस्तात् ज्योतिष्टोमेन तथोपरिष्टादिति शाण्डिल्यायनः १३ प्रत्यवरोहणीयेनैवान्ततो यजेत नेतरेषां केनचिदिति गौतमः १४ सदस्यसप्तदशान् पृथगृत्विजो वृणीत १५ तस्य दक्षिणा दासीनिष्करथहस्तियानगवां पृष्ठ्यानाञ्चाश्वानांᳬसप्तदशैकैकस्य जातस्य १६ सहस्राणि गवांᳬशतानि वा १७ सप्तदश वैव गावस्तं कुरुवाजपेय इत्याचक्षते १८ ताः सममृत्विग्भ्यो विभजेत् १९ श्रेष्ठतो वा मध्यतःकारिभ्यः २० येन रथेनाजिन्धावेत्तमुद्गात्रे दद्यादासन्दीञ्च सास्तरणां यामभिषिक्त आरोहेत् २१ बस्तचर्म सरुक्मᳬ होत्रे यस्मिन्नासीनोऽभिषिच्येत २२ वसनमयो रशना अध्वर्यवे २३ हिरण्यस्थालं मधुनः पूर्णं ब्रह्मणे २४ कंᳬसस्थाले वा हिरण्यतुषान्मधुमिश्रान् २५

इति अष्टमस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

तस्य व्रतानि क्षत्रवृत्तिं वर्त्तयेत् १ प्रत्यवरोहणाभिवादने जघन्यव्रज्यांᳬसमानशय्यतामिति वर्जयेदवाजपेययाजिभिः २ यथावयसं वाजपेययाजिभिः ३ प्रत्यवरोहणीयेनेष्ट्वा नैतानि व्रतानि चरेदिति लामकायनः ४ तस्य विकल्पाः ५ प्राकृतएव वाजपेय एकिप्रभृतीद्व्युत्तरान् सप्तदशत्रयस्त्रिंशान्तान् स्तोमान् कल्पयेत्समयूरो नीकर्षीत्याचक्षते ६ तस्योपास्मै गायतेति बहिष्पवमानम् ७ ब्रह्मसामैव प्रत्येतेनेष्ट्वा स्वर्गं लोकमाक्रमेतेति धानञ्जय्यः ८ ज्योतिष्टोमोऽतिरात्रोऽषोडशिकोऽनतिरात्रो वा षोडशिमान् ९ तस्य बृहत्सप्तदशंᳬस्तोत्रंᳬस्यात् पञ्चदशस्तोमंᳬस्वासु १० अग्निष्टोमो वा ११ तस्याभीवर्त्तो ब्रह्मसामानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद्बृहदग्निष्टोमसाम १२ पञ्चविंᳬशं पृष्ठानां ब्रह्मसामाछावाकसाम वा चतुर्विंᳬशमितरत् १३ एतस्य वैव चतुस्त्रिंᳬशानि पृष्ठान्यग्निष्टोमसाम च सप्तदशमितरत् १४ नैतेषां कश्चन वाजपेय इति गौतमो यजमानश्चैभिर्न वाजपेयदक्षिणा

दद्यादिति दद्यादिति १५

इति अष्टमस्य द्वादशी कण्डिका

इति अष्टमः प्रपाठकः समाप्तः

## नवमः प्रपाठकः

### अथ प्रथमा कण्डिका

राजा राजसूयेन यजेत १ फाल्गुनीपक्षस्य प्रथमायां दीक्षेताभ्यारोहणीयाय ज्योतिष्टोमाय २ तस्यैका दीक्षा द्वादशꣳशतं दक्षिणाः ३ संवत्सरादूर्ध्वमभिषेचनीयेन यजेत तस्मिन्नेव काले ४ तस्य तथैव दीक्षा ५ द्वे इति गौतमः ६ तथा सत्यभ्यारोहणीयस्यापि द्वे ७ एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति शाण्डिल्यस्त्रयो-दश्यान्त्वपरपक्षस्य दीक्षेत ८ तस्य दक्षिणा द्वात्रिꣳशतं मध्यतः कारिभ्यः सहस्राणि दद्यादेकैकस्मै ९ षोडश प्रस्तोतृमैत्रावरुणप्रति-प्रस्थातृब्राह्मणाछꣳसिभ्यः १० ता अर्द्धिन्यः ११ अष्टौ प्रतिहर्तृपो-तृनेष्टृछावाकेभ्यस्तास्तृतीयिन्यः १२ चत्वारि सुब्रह्मण्याग्नीध्रोन्नेतृ-ग्रावस्तुद्भ्यस्ताः पादिन्यः १३ अबलानस्य ज्ञातीन्सवित्तानावहेयुः १४ ताञ्जिनीयाद्दक्षिणावेलायाम् १५ इषूꣳश्चैभ्योऽस्येत् १६ ताꣳस्त एव प्रत्याहरेयुर्विजयस्व राजन्निति १७ तेषां वित्तस्य तृतीयमृत्विग्भ्यो दद्यात् १८ दशपेयेऽनुप्रसृप्तिभ्यस्तृतीयम् १९ शेषन्तेभ्य एव प्रत्युत्सृजेत् २० ग्रामानेभ्योऽपि दद्यात् २१ राजन्यास्ते स्युस्तत ऊर्द्ध्वमनभिषेक्याः २२ तेनेष्ट्वा न साक्षादवभृथमभ्यवेयात् कृष्ण-विषाणं कृष्णाजिनपादं वावदध्यात् २३ वाराहीभ्यामित उपानद्भ्यां व्रजेत्कार्ष्णीभ्यां प्रत्याव्रजेत् २४

इति नवमस्य प्रथमा कण्डिका

### अथ द्वितीया कण्डिका

तद्दीक्षित एव दशाहे ततो दशपेयेन यजेत १ तस्य ब्राह्मणं दश दश चमसमभियन्तीति २ सुब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षद्भान्ये

३ एवमितरेषामेकैकं यावता दश पूर्यैरन्यजमानचमसादन्यान् ४ ते दशमातृर्दशपितृनित्यन्वाख्याय प्रसर्पेयुरादशमात्पुरुषादिति ह्याह ५ यत्राब्राह्मणीमधिगच्छेयुर्ब्राह्मण्यैवाभ्यासं दश संपूरयेयुः ६ अस्मरन्तश्च यतः स्मरेयुः ७ ऋत्विग्भिः सह धिष्ण्यानुपतिष्ठेरन् ८ स्रगुद्गातुरिति स्रप्स्यतेऽस्मै बहिष्पवमानꣳहिरण्यस्रजं त्रिपुष्करां प्रतिमुञ्चेत् ९ आस्ताव उपविष्टाय यजमान औदकीं द्वादशपुष्करां यास्य वा स्यात् १० स्तुत्वा बहिष्पवमानेन यजमानायैवौदकीं प्रत्युत्सृजेत् ११ इतरया प्रतिमुक्तया सर्वमहः कृत्वा ताꣳस एव हरेत् १२ प्राकाशावध्वर्य्वोरिति सौवर्णोऽध्वर्योर्दक्षिणतः स्याद्राजतः प्रतिप्रस्थातुः सव्यतः १३ वासः पोतुरिति कार्पासꣳस्यात् १४ बरासी नेष्टुरिति क्षौमी स्यात् १५ ब्राह्मणेनैवेतरा विज्ञाता १६ तस्या-वभृथादुदेत्य संवत्सरन्देवव्रतानि चरेत् १७ उन्मृदीतानाप्लवमानः १८ धावेत दन्तान् १९ निकृन्तयेत नखान् २० श्मश्रूणि वापयेत न केशान् २१ वैयाघ्रे चर्मण्युत्तरलोम्नृयग्न्यगारे संविशेत् २२ अहरहः समिध आदध्यात् २३ नानुग्रामं प्रविशेत् २४ नास्याब्राह्मणा राष्ट्रे वापयेरन् २५ अश्वानाञ्च न केशाꣳश्छिन्द्युः २६ न तेजनी दन्तान् २७ न प्रस्रवणानि २८ ब्राह्मणास्तु यथाभिप्रेतं ये च tानानु स्युः २९

इति नवमस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

संवत्सरादूर्द्ध्वं केशवपनीयाय दीक्षेत यस्मिन् कालेऽभिषेचनीयेन यजेत १ तस्य पौर्णमास्यामतिरात्रः २ दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्षस्तस्मिन्नेव केशवपनीयेन यजेतेति धानञ्जय्यः पौर्णमा-स्याञ्चैवातिरात्रः ३ तस्य सहस्रं दक्षिणाः ४ तस्योदवसानीय-येष्ट्वानिष्ट्वा पौर्णमासेन व्युष्टिद्विरात्राय दीक्षेतामावास्यायां पूर्वमह-रिति चेच्चिकीर्षेत् ५ पौर्णमास्यामिति चेत्पूर्वपक्ष एव दीक्षेत ६ उभयोर्विचारयोर्यजनीय उत्तरमहः ७ व्यष्टकायामुत्तरमिति तामिस्र-प्रथमास्तिस्रो व्यष्टका इत्याचक्षते ८ उभे वा पूर्वपक्षे स्यातां ये एव

समानपक्षे पुण्याहनी स्यातां तयोरेव कार्य्यमिति ह्यायेति ९ पूर्वेण दक्षिणा व्याख्याताः १० तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेता-वकाशश्चेत् स्यात् ११ अविद्यमाने य उत्तरः पूर्वपक्षस्तस्मिन् १२ सोऽभ्यारोहणीयेन व्याख्यातः १३ तयोः पृथक्सहस्रे दक्षिणा इति गौतमधानञ्जय्यौ द्वे च सहस्रे केशवपनीये तथा व्युष्टौ १४ चत्वा-र्यभिषेचनीये गौतमः १५ पञ्च धानञ्जय्यो नित्यं त्वबलानां ज्ञातीनां वित्तम १६

इति नवमस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

राज्येकविंशतिवर्गान्यथोत्साहं दद्यादैन्द्रेण त्वृषभेण पुरस्तादुपरिष्टाच्च परियजेत १ विराजि दशवर्गान्यथोत्साहं दद्यादाग्नेयेन तु पशुना पुरस्तादुपरिष्टाच्च परियजेत २ वैश्वदेवेनौपशदे ३ तस्य चतु-र्विꣳशꣳशतं दक्षिणाः ४ पूर्वे वयस्युच्चावचान्याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन् पुनःस्तोमेन यजेत ५ तस्य द्वादशमिथुना दक्षिणा इति धानञ्जय्यः ६ पुनः सꣳस्कृतो रथः पुनरुत्स्यूतꣳशामूलं पुनर्धेनुः पुनर्वत्स इति शाण्डिल्य एतेषां यथोत्साहं दद्यात् ७ चतुष्टोम-योरेकखुराणां पूर्वस्मिन्यथोत्साहं दद्यादुभयेषामुत्तरस्मिन् ८ उद्भि-द्बलभिद्भ्यामविप्रयोगेण यजेत ९ ताबुभौ सप्तापवर्गौ स्याताम् वसन्ते च १० अर्द्धमास एनावन्तरेण स्यान्मासो वा संवत्सरो वा ११ तयोः पृथक् चतुर्विꣳशतिवर्गान् यथोत्साहं दद्यात् १२ पृथक् चतुर्युजा-वश्वरथावपचित्योः १३ उभयतः काꣳस्यकवचौ १४ शतार्हाः स्युरश्वाः शतक्रियो वा १५ राजैताभ्यां यजेतेति धानञ्जय्यः १६ यः कश्चापचितिकाम इति शाण्डिल्यः १७ ऐकाहिकेन व्रतेनोक्त उपायो-ऽग्नेः स्तोमयोः १८ तयोः पृथक्चत्वारि धान्याचितानि दक्षिणाः षड्ग-वानि पूर्वस्य चतुर्गवान्युत्तरस्य १९ ऋषभाणां द्वादशꣳशतं दक्षिणतः सहस्रं वर्षभे २० अविद्यमानेषु कतिपया अप्यृषभाः स्युः साण्डा इतरे वत्सतराः २१ वैश्यं यं विशः स्वराजानः पुरस्कुर्वीरन् स गो-

सवेन यजेत २२ स बृहस्पतिसवेन व्याख्यातः २३ अयुतं त्वस्य दक्षिणाः २४ सखायो भ्रातरो वा ये सम्पादयेयुस्ते मरुत्स्तोमेन यजेरन् २५ तस्य दक्षिणा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते तेषां यथोत्साहं दद्युः २६ येषां केषाञ्चेति धानञ्जय्यः २७ कुलदक्षिण इन्द्राग्न्योः कुलायः २८ सहस्रमिन्द्रस्तोमे २९ राजपुरोहितौ यजेया-तामिन्द्राग्न्योः स्तोमेन ३० गायत्रीसम्पन्ना दक्षिणा ब्राह्मणो दद्यात् जगतीसम्पन्ना राजा ३१ कामन्तु पृथग्यजेयातां तयोरेवमेव दक्षिणाः ३२ विघनाभ्यां पशुकामो यजेताभिचरन्वा ३३ सोमसामाथर्वणं वेत्याथर्वणं पशुकामयज्ञे कुर्यात् सोमसामाभिचरतः ३४ वृहती-सम्पन्नाः दक्षिणाः पशुकामस्य ३५ इषुणाभिचरतो व्याख्यातौ ३६ सन्दꣳशवज्रो च ३७ राजानꣳसन्दꣳशेनाभिचरेज्जनपदं वज्रेण ३८ राजानमभिचरन्व्यत्यासमेनौ प्रयुञ्जीत ३९ ज्योतिष्टोमेनैवान्ततो यजेत शान्त्यर्थः शान्त्यर्थः ४०

इति नवमस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

पौर्णमासीदीक्षामासापवर्गा अहीनाः १ तेषां द्वादशोपसदः २ षडिति धानञ्जय्यः ३ एकत्रिंशेऽहनि यज्ञपुच्छं त्रिंशे वा ४ सत्याभ्युच्चये दीक्षाप्रतिह्रासः ५ सर्वेऽतिरात्रा अहीना द्विरात्रप्रभृतयश्चाहर्गणा अश्वमेधादन्ये सहस्रदक्षिणाः प्राक् चतूरात्रेभ्यः ६ तत्प्रभृतीनां भूयस्यः सुत्याभ्युच्चयेन ७ ताः समꣳ सर्वेष्वहःसु विभाजं दद्यात् ८ समानुपपत्तावुत्तमेऽहनि भूयिष्ठाः ९ अयुतमेकादशरात्रे दद्यात् १० नव नव पूर्वेष्वहःसु शतानि सहस्रमुत्तमे ११ अप्तोर्याम्णि कृता गर्भाः कल्पेन १२ रथन्तरं वा पृष्ठम् १३ तस्य स्थाने बार्हतं वाजजित् १४ वृहद्वारवन्तीये उत्तरे पृष्ठे १५ कालेयस्यर्क्षु वारवन्तीयम् १६ तस्य स्थाने पूर्वम् १७ समं तस्य च कालेयम् १८ पार्थस्यौशनम् १९ त एव गर्भाः पृष्ठेषु २० वैश्वजितान्याज्यान्याज्येषु गर्भान् कुर्य्यादिति धानञ्जय्यः षाष्ठिकान्युक्थान्युक्थेषु २१ यथैवार्षेयकल्पेन कृतमिति

शौचिवृक्षिः २२ ज्योतिष्टोमे वातिरात्रेऽतिरिक्तस्तोत्राण्यादध्यात् षोडशिमतीति शाण्डिल्यः २३ त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयञ्च बृहद्गर्भम् २४

इति नवमस्य पञ्चमी कण्डिका

अथ षष्ठी प्रकाश

तिरात्राणां प्रथमेऽहनि वषट्कारिभ्यो दद्यात् ग्रावस्तुते च १ छन्दोगेभ्य उत्तमे २ मध्यम इतरेभ्यः ३ शतमेकैकस्मै मध्यतःकारिभ्यो दद्यात् ४ पञ्चाशतमर्द्धिनीभ्यः ५ तृतीयिनीनां विꣳशतिं पोत्रे तथा नेष्ट्रे ६ त्रिꣳशतमितराभ्यामाग्नीध्राय च पादिनीनाम् ७ नवोन्नेत्रे दशेत-राभ्याम् ८ अन्वहन्तून्नेत्रे समं दद्यात् ९ दश सदस्याय प्रथमेऽहनि सप्ततिं द्वितीये विꣳशतिं तृतीये १० दशदशार्षेयप्रवादिभ्यो य उक्ता ब्राह्मणेन ११ अनूचानौ पूर्वयोरह्नोरननूचान उत्तमे १२ दशशतꣳ शिष्यन्ते ता ऋत्विग्भ्यो दद्यात् प्रसर्पकेभ्यो वा १३ सहस्रतमीं मध्यमेऽहनि ब्रह्मण आग्नीध्राय च १४ शुक्लं कृष्णं रोहितमित्यस्या रूपाणि १५ दश कला ब्रह्मणे पञ्चाग्नीघ्रायैका ममेत्यपाकुर्वीत १६ तामन्यया गवा निष्क्रीय दक्षिणेऽस्याः कर्णे गोनामानि जपित्वा गोष्वपि सृजेत १७ ज्योतिष्टोमविधिरनन्तराम्नानात् द्वादशाहभूतस्य स्यात् १८ तल्लिङ्गदर्शनाच्च यथा पृष्ठानाम् १९ पुनराम्नाना-च्चाहीनैकाहादौ २० नाना प्रकरणवत्तु चोदितानामानन्तर्यात्सम्बन्धो न स्याद्यथोपहव्यर्त्तपेययोः २१ लिङ्गग्रहणञ्चान्यार्थेन यथा षष्ठेऽहनि शक्वरीणाम् २२ शेषविधेः पुनराम्नानम् २३

इति नवमस्य षष्ठी कण्डिका

अथ सप्तमी कण्डिका

तस्मिन् स्वतन्त्रेऽहीनरात्रिः स्यादविशेषेण ह्यहीनेषु चोद्यते १ प्राकृती त्वेव स्यादधिकृत्याम्नानात् २ अविशेषचोदना शेषे यथा चतुरवत्तम् ३ एतेनोक्तमोङ्कारस्य प्रत्याम्नानं वाचा रथन्तरे ४ समुच्चयस्तु

नानार्थत्वात् प्रस्तावशान्त्यर्था हि वागुद्गीथादेरोङ्कारः ५ वाक्तु पूर्वमेवं यथार्थप्रत्यासत्तिः ६ उत्तरा वा जघन्यविधेराचाराच्च ७ एकस्तोमेषु वैदत्रिरात्रे च स्वस्तोमा रात्रिः स्यात्तथा सन्धिरुभयꣳ ह्यविकारेण वर्त्तते ८ पराक्त्वञ्च त्रिवृतोऽन्यत्र सन्धेर्नोपपद्यते त्रिवृतातिरात्रेणेति च विशेषचोदना ९ वृत्त्यपेक्षा चादेशेन विद्यते यथा षोडशं प्रथमं रात्रिषामेति १० अर्थोक्तिः सन्धावावापः ११ अभ्यासो वा १२ ब्राह्मणमाज्यदोहानामग्निमुपनिधायं स्तुवत इति होतुर्धिष्ण्येऽग्निं धारयेयुः प्रथमेऽहनि यं मध्यन्दिन आनयेयुः १३ प्रातःसवन उत्तर-योरह्नोः १४ स्तोत्रवेलायामेनं प्रज्वलयेयः १५ तमनुमन्त्रयेताग्निरसि वैश्वानरो नमस्तेऽस्तु मा मा हीꣳसीरिति १६

इति नवमस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

सहस्रपोषकामः शबलीहोमं कुर्वीत १ नात्रिरात्रयाजीति शाण्डल्य-स्त्रिरात्रो वा एतां प्रदापयतीति ह्याह २ यः कश्च सहस्रपोषकाम इति धानञ्जय्यः ३ वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयि-त्वाहतं वसनं परिधायानन्तर्हिते स्थण्डिले द्वादश रात्रीरधः शयीत तप्तं क्षीरं पिवन् ४ नित्याभ्याहितोऽस्याग्निरावसथे स्यात् ५ नैनमन्यः सुहृदः प्रैषकृतोऽनुप्रविशेत् ६ अल्पव्याहारी च स्यात् ७ अदूरगामी ८ द्वादश्या उपव्युषं परिसमुह्याग्निं परिस्तीर्य्यौदुम्बर इध्मः स्या-त्स्रुक्स्रुवौ च तथा चमसस्तस्माद्दधिमधुसर्पिरिति स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वा ९ तञ्जुहुयाच्छबलिः समुद्रोऽसीति १० स्वाहाकारेणोत्तराम् ११ स्रुचि यः शेषः स्यात्तं चमस आनीय प्राश्नीयात् १२ प्रक्षाल्य स्रुक्स्रुवौ चमसञ्च निदध्यात् १३ तत्रैवानु-प्रहरेदिति शाण्डिल्यायनः १४ प्राङ् वोदङ्वा ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशोर्नाश्रृणुयात्तदरण्यं परेत्य दर्भस्तम्बमालभ्य शबलि शबलीति त्रिः परमकण्ठेन क्रोशेत् १५ यदन्यच्छुनो गर्दभाद्वा प्रतिवाश्येत समृद्धं कर्मेति विद्यात् १६ एवमा तृतीयꣳ संवत्सरा-

त्यासमप्रतिवाश्यमाने कुर्वीत १७ प्रथमतश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यात् १८ आ तृतीयञ्चाप्रति-वाश्यमाने १९ शान्तिर्वामदेव्यꣳ शान्तिर्वामदेव्यम् २०

इति नवमस्य अष्टमी कण्डिका

अथ नवमी कण्डिका

राजाश्वमेधेन यजेत १ तस्योपायो यथा महाव्रते गौतमीयम् २ उपसदस्त्वस्याहीनिक्यः ३ दीक्षित्वाश्वमुत्सृजेत् श्वेतं कृष्णमण्डल-मह्णो रूपं योजवेन सम्पन्नः ४ तमनावर्त्तयन्तो दिग्भ्यः संवत्सरं रक्षित्वा राजक्रये बध्नीयुः ५ ग्रीष्मउपक्रमेति धानञ्जय्यः ६ वसन्त इति शाण्डिल्यः ७ चैत्रवैशाखयोरन्यतरस्य सप्तम्यामष्टम्यां वा मध्यतःकारिण ऋत्विजो ब्रह्मौदनं भोजयित्वा तेभ्यः पृथक्सहस्राणि दद्यात् ८ पौष्णयामिष्टौ विततायाꣳ सꣳस्थितायां वाश्वमुत्सृजेत् तन्तयैवावृता रक्षेयुः ९ तिस्र इष्टयः सावित्र्यो भवन्ति तासु सꣳस्थि-तासु दक्षिणत आहवनीयस्य हिरण्मये कूर्चे प्राङ्मुख आसीनो यजमानः संवत्सरमहरहर्होतुः पारिप्लवमाचक्षाणस्य शृणुयात् १० हिरण्य-कशिपुनि ब्रह्मोद्गाता चोदङ्मुखौ ११ शतꣳ होत्रे दद्यात् दशाध्वर्य्यवे १२ सहस्रं वा होत्रे शतमध्वर्य्यवे किञ्चिच्चेतराभ्याम् १३ तस्य देवव्रतानि यथा राजसूये १४ संवत्सरादूर्द्ध्वमश्वं बद्ध्वा दीक्षेत १५ तदहरेतान्यृत्विज आसनानि यथास्वꣳ हरेरन् १६ तस्य द्वादश दीक्षा द्वादशोपसदः सर्वेषामह्नां बहिर्बहिष्पवमानैः स्तुवीरन् १७ मध्यमे-ऽहन्यश्वस्य बालधिमालभ्य बहिष्पवमानꣳ सर्पेयुः १८ सर्पत्सु यजमान उद्गातारं ब्रूयात् उद्गातरप त्वावृणे शतेन च निष्केण चाश्वो म उद्गास्यतीति १९ अश्वमास्तावमाक्रमय्य वडवां दर्शयेयुः २० तां यदाभिक्रन्देदथ यजमान उद्गातारं ब्रूयादुद्गातरुप त्वाह्वये शतेन चैव निष्केण च त्वमेव म उद्गास्यसीति २१ उदञ्चमश्वमुत्क्रमय्यास्ताव उपविश्योद्गाताश्वव्रतेन स्तुयादभि वाजी विश्वरूप इत्येतासु २२ हिरण्यकशिपुन्यासीनो बहिष्पवमानेन स्तुत्वा स एव तद्धरेत् २३

इति नवमस्य नवमी कण्डिका

अथ दशमी कण्डिका

या पत्नीनां प्रियतमा यजमानस्य मा वावाता राजपुत्री १ अनपचिता परिवृक्ती २ संज्ञप्तेषु पशुषु होत्राभिमेथिते ब्रह्मा वावातामभिमेथे- दूर्द्ध्वामेनामुच्छ्रयताद्गिरौ भारꣳहरन्निवाथास्यै मध्यमे जतु शीते वाते पुनन्निवेति निर्दिशेत् ३ शतमस्या राजन्यानां दुहितरोऽनुचर्य्यः स्युस्तास्तं प्रत्यभिमेथेयुरूर्द्ध्वमेनमुच्छ्रयताद्गिरौ भारꣳ हरन्निवाथास्य मध्यमेजतु शीते पुनन्निवेति निर्दिशेयुः ४ उद्गाता परिवृक्तीमभि- मेथेद्यदस्या अणुहोद्ध्या अणुस्थूलमुपातसन् मुष्कौ यदस्या एजतो गोशफे शकुला विवेति निर्दिशेत् ५ शतमस्याः सूतग्रामणीनां दुहितरोऽनुचर्य्यः स्युस्तास्तं प्रत्यभिमेथेयुर्यं देवासो ललामगुं प्रसꣳ- ह्रष्टिनमाजिषुरिति निर्दिशेयुः सक्थ्ना देदिश्यते नार्यृतस्याक्षिभुवो यथेति ६ अप उपस्पृश्य वामदेव्यं गीत्वा तस्यर्चोऽनुजपेयुः ७ स्वाहाकृतिभिश्चरिते पूर्वेण सद उपविश्य ब्रह्मोद्यं वदेयुः ८ होत्राध्वर्युणा चोक्ते ब्रह्मा पृच्छेदुद्गातारं पृच्छामि त्वा चितयं देवसख यद्यत्त्वमत्र मनसानुवेत्थ येषु विष्णुस्त्रिषु पदेष्वष्ट येषु विश्वं भुवनमाविवेशेति ९ तं प्रति ब्रूयादपि तेषु त्रिषु पदेष्वस्मिन् येषु विष्णुस्त्रिषु पदेष्वष्ट येषु विश्वं भुवनमाविवेश सद्यः पर्येमि पृथिवीं द्यामुते मामेकेनाङ्गेन दिवो अस्य पृष्ठमिति १० उद्गाता पृच्छेद्ब्रह्माणं किꣳस्विदन्तःपुरुष आविवेश कान्यन्तःपुरुषे अर्पितान्येतद्ब्रह्मन्नु- पबलिहामहे त्वा किꣳस्विन्नस्त्वं प्रतिवोचास्यत्रेति ११ तं प्रति ब्रूयात् पञ्चस्वन्तःपुरुष आविवेश तान्यन्तःपुरुषे अर्पितान्येतत्तान् प्रतिमन्वानो अस्मिन्न मायया भवस्युत्तरो मदिति १२ सर्वे यजमानं पृच्छेयुः पृच्छामस्त्वा परमन्तं पृथिव्याः पृच्छामो यत्र भुवनस्य नाभिः पृच्छामस्त्वा वृष्णो अश्वस्य रेतः पृच्छामो वाचः परमं व्योमेति १३ तान् प्रति ब्रूयादियं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिरयꣳसोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योमेति १४

तस्य दक्षिणाः सहस्त्रं प्रथमेऽहनि दद्यात्तथोत्तमे १५ मध्यमेऽहन्ये-कजनपदे यदब्राह्मणानां वित्तँ स्यात् तत् दद्यात् १६ विजितस्य वा मध्ये यजेत १७

इति नवमस्य दशमी कण्डिका

अथ एकादशी कण्डिका

प्राचीँ होत्रे दिशं दद्यात् दक्षिणां ब्रह्मणेऽध्वर्यवे प्रतीचीमुदीचीमुद्गात्रे यदन्यत्क्षेत्राच्च पुरुषेभ्यश्चेत्युभयोर्विचारयोः १ यावद्वा ब्रूयुर्नेतोभूय इच्छाम इति २ अष्टाचत्वारिँशतं वा मध्यतः कारिभ्यः सहस्राणि दद्यादेकैकस्मै चतुर्विँशतिमर्द्धिनीभ्यो द्वादश तृतीयिनीभ्यः षट् पादिनीभ्यः ३ अवराध्या एताः कामन्तु भूयसीर्दद्यात् ४ तस्य विकल्पाः ५ एतान्येव पञ्चदशस्तोमान्यहानि कल्पयेत् स पतन्तको-ऽश्वमेधः ६ अर्द्धमासमश्वञ्चारयित्वैतेन यजेत ७ ज्योतिष्टोमो वै तस्यातिरात्रस्तृतीयमहः स्यात् तेन मासम् ८ गौर्वा तेन त्रीन् ९ आयुर्वा तेन षट् १० प्राकृतस्य वैतेषामह्नां किञ्चित्तृतीयमहः स्यात् ११ विश्वजिदभिजिद्व्रताप्तोर्य्यामाणां वातिरात्राणामेव १२ तेषाँ-स्तोमचोदनैव स्यात् यथा चतुष्टोमसर्वस्तोमयोस्त्रिरात्रेषु च तन्त्र-विलोपो न विद्यते १३ स्वतन्त्रास्त्वेव स्युः कृतलक्षणा हि पुरस्ता-च्चोद्यन्ते प्रत्यक्षविकारात्स्तोमचोदना चतुष्टोमसर्वस्तोमयोः १४ वचनात्तन्त्रविलोपो यथा जामिकल्पः सर्वस्वारे १५

इति नवमस्य एकादशी कण्डिका

अथ द्वादशी कण्डिका

त्रयोदश्यामपरपक्षस्य दीक्षेत जामदग्नाय १ तस्य विंशतिर्दीक्षा द्वादशोपसदः २ तत्रोपसत्सु पृथग्घोमानध्वर्युर्जुहुयात् पुरोडाशाँस्त उक्ता ब्राह्मणेन ३ समानदेवतौ पूर्वाह्णापराह्णयोः ४ अग्ने वेर्होत्र-मित्येतत्प्रभृतय एषाँहोमाः ५ तस्यावभृथादुदेत्य द्वादशाहमिष्टि-भिर्यजेत ६ तास्वेत एव प्रतिलोमाः पुरोडाशाः ७ वसिष्ठस्य जनित्रे

भवत इति सꣳसर्पस्य चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथगनुपूर्वमनुकल्पयेच्चतुर्थꣳ हि जनित्रस्थानम् ८ तयोर्विकल्पः स्यादार्षेयकल्पेन ९ पञ्चशारदीये पशुबन्धैर्यजेत सप्तम्यामष्टम्यां वाश्वयुजीपक्षेषु १० वत्सतरीरेवालभेरन्नुक्ष्णो विसृजेयुः ११ तेषां यावन्तो भ्रेषमापद्येरꣳस्तावतोऽन्यानयजुष्कृतानपिसृजेयुस्तथारूपाꣳस्तावद्वर्षान् १२ षष्ठ्यां शरदि कार्त्तिके मासि यजेत १३ तस्य द्वादशोपसदः १४ तृतीये षड्रात्रे पञ्चमस्याह्नः प्रत्यवरोहीण्युक्थानि स्युरित्याचार्य्या अभ्यासंध्यो ह्यत्र यथा देवानां पञ्चरात्रे १५ रात्रिकारितस्तत्र प्रत्यवरोह इति गौतमस्त्रयस्त्रिंशान्येव स्युरिति १६ सप्तरात्राणां प्रथमस्यातिरात्र एकविꣳशान्युक्थानि स्युर्ज्योतिष्टोमप्रदेशात् ज्योतिष्टोमप्रदेशात् १७

इति नवमस्य द्वादशी कण्डिका

इति नवमः प्रपाठकः समाप्तः

## दशमः प्रपाठकः

### अथ प्रथमा कण्डिका

दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुः १ तेषामेकस्यानुपपत्तौ क्रयोऽपरपक्षे स्यात् २ प्रसवश्च यदि द्वे ३ त्रिषूत्थानमेव पूर्वपक्षे स्यात् ४ तेषां द्वादश दीक्षास्तथोपसदोऽनादेशे ५ सांवत्सरिकेभ्यश्चोर्द्ध्वं दीक्षाणां याथाकामी ६ प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानञ्जय्य एकाष्टका महाव्रतममावास्यातिरात्र इति ह्याहेति ७ अष्टादशेति गौतमः पौर्णमास्यतिरात्र इति ह्याहेति ८ जातिकल्पो वा ९ षोडशरात्रप्रभृतीनि त्रिंशद्रात्रान्तान्यष्टादशदीक्षाण्यैकान्नपञ्चाशद्रात्राणि च १० द्वादशाहप्रभृतीनि सत्राणि ११ तेन यजेताप्यहीनभूतेनाहीनलिङ्गानि ह्यस्मिन् ब्राह्मणं दर्शयति यथैकदीक्षणम् १२ प्रथमेऽहन्याक्षारं ब्रह्मसाम कुर्वन्नौधसस्यर्क्षु कुर्यात् १३ तस्यौष्णिहमेकाक्षरणिधनꣳस्थाने स्यान्नौधसं वा १४ अनाचारस्तूष्णिक्षु बार्हतानामनेकाक्षरणिधनानि चात्र भूयिष्ठानि सामानि १५ तत्र पौष्कलं कुर्यात् ज्योतिष्टोमप्रायाणि ह्यत्र सामानि १६

इति दशमस्य प्रथमा कण्डिका

## अथ द्वितीया कण्डिका

शर्क्वरीषु षोडशिना स्तुवीतेति गौरीवितं महानाम्नीषु स्यादृक्चोदना हि तत्प्रकरणे १ महानाम्न्यस्त्वेव षोडशिसाम स्युर्नह्येतास्वन्यत्सामापद्यते २ अपि ह पृष्ठस्तोत्रीयेषु परोक्षाणि कुर्वन्नेतासु नित्यवत्साः करोति ३ कृताश्चैतस्मिंस्थाने वज्रस्य ४ विराट्स्वनुष्टप्सु च गौरीवितमेव स्यात्स्वारप्रायाणि हि षोडशिसामानि ५ शर्क्वरीणां काम्यानि निधनानीडास्थानेषु स्युरित्याचार्य्यास्तद्धि भूयिष्ठम् ६ ऊधःस्वेवेति गौतमधानञ्जय्यावत्र हि निधनवादं वदति ७ अथकारस्थान इति शौचिवृक्षिरेवमल्पीयान् विकारः ८ अनियमात्सर्वेषु निधनस्थानेष्विति कौत्सः ९ उत्तमया स्तोत्रीयया संयुक्तं पुरीषमानन्तर्यादिति धानञ्जय्यः १० शर्क्वरीभिः स्तुत्वेत्यपवर्ज्य पुरीषेणेत्याह तस्मादसंयुक्तं स्यात् ११ पर्य्यायान्ते स्यात् स्तोत्रान्ते वा १२ पञ्चमेऽहनि रायोवाजीयं ब्रह्मसाम कुर्वꣳस्तस्य स्थाने कुर्यात् यत् कल्पवृत्तेनोपपन्नम् १३ बार्हद्गिरं कुर्यादरण्ये गेयꣳ हि सच्छन्दस्यञ्च समाने चाहनि दृष्टम् १४ पार्थुरश्मं कुर्वन् बार्हद्गिरस्यर्त्तु कुर्यादृचामसञ्चाराय १५

इति दशमस्य द्वितीया कण्डिका

## अथ तृतीया कण्डिका

दशमस्याह्नोऽनङ्गमेके मानसं ब्रुवते बहिष्पत्नीसंयाजत्वादस्तोत्रस्थानꣳ हि १ अग्निष्टोमावभित इति २ अवयवेन चास्य सर्गं वदति ३ अङ्गन्तु स्यादधिकृत्याम्नानात् ४ अस्तोत्रस्थानमित्येकस्तोत्रस्यापि स्वातन्त्र्यं न विद्यते ५ अग्निष्टोमावभित इति वादमात्रं यथा यदुक्थ्यो यज्ञक्रतोरनन्तरयायेत्यतिरात्रस्य गवामयने ६ नच सर्गावयवादधिकृत्याम्नातमनङ्गꣳस्यात् यथा रथन्तरं ज्योतिष्टोमस्य ७ अतिरात्रयोः षोडशिन्यनादिष्टे प्रतिषिद्धे वा क्रियमाणे यत्र विराडुपपद्येत कुर्य्यादेनं

तत्रेत्याचार्य्या द्वादशाहे हि क्रियते न गवामयने तत्र तथोपपद्यते ८ अकारणन्तु सम्पद्बहवो ह्यविराट्सम्पन्नाः कारणञ्चापूर्वस्य विधेर्न विद्यते ९ याथाकामी त्वतिरात्रस्य प्रकृतौ तस्मादिहापि तथैव स्यात् १० नियमार्थौ तु विधिप्रतिषेधौ ११ पूर्वस्मिꣳस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामादेशाद्गौरीवितस्य चानादेशात् १२ गवामयनन्यायेन पृष्ठ्योऽवच्छिन्नो हि तथा प्रवर्त्तते १३ दशरात्रवत्त्वव्यतिरेकात् १४ सच्छन्दोमत्वात् १५ व्यूहसमाधेः १६ प्रत्नवच्चाद्यबहिष्पवमानं परेण ह्येतदस्य पत्नानुरूप इत्याह १७ दृष्टञ्च दशमार्थमव्यवच्छेदे १८ नवाहयोगाच्च १९ संवत्सरादेशाद्रात्रिसत्रेषु तथैवाभिप्लवानामभ्यास इति गौतमः २० त्रयस्त्रिंशद्रात्रे निवृत्तिमुत्तरेषां दर्शयतीत्यपरे २१

इति दशमस्य तृतीया कण्डिका

## अथ चतुर्थी कण्डिका

आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो मानवादिर्बृहती तज्जामि स्यात्सन्तनिना १ वैकृतत्वात् तु निवृत्तिः २ पञ्चाहेष्वभिप्लवन्न प्रसजेत् ३ तान् पृष्ठ्यस्तोमपञ्चाहानेकेऽनादेशे प्रकृतिप्रत्ययाद्विश्वजिदन्ववायान्नाना ब्रह्मसामत्वात्पृष्ठ्यतः षष्ठस्यालोपवचनात् ज्योतिर्गौरायुरित्यनादेशात् त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाह ४ समास्त्वेते ५ अभिप्लवपञ्चाहा एवेति गौतमोऽधिकृतो हि स सत्रेषु भवतीतरश्चादृष्टः ६ अभ्यासश्चास्य प्राकृतस्यापि कुतः पञ्चाहस्य ७ ज्योतिर्गौरायुर्गौरायुः पञ्चाहः स द्वितीयः स तृतीय इति च परब्राह्मणम् ८ एष प्रत्नावार्कजम्भं वा प्रतिपञ्चाहं यथा लोकबृहद्रथन्तराश्चेत् ९ आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु सर्पीꣳषि फाणेयुः पृथग्देवसुरभिभिर्यान्युक्तानि ब्राह्मणेन १० तैः सुत्यासूपाकरणवेलायाꣳसवनानां पूर्वेण हविर्द्धाने आसीनां आञ्जीरन्नभ्यञ्जीरꣳश्च ११ भुक्त्वाग्नीध्रीय एवेति गौतमः १२ उक्तमानुपूर्व्यं ब्राह्मणेन १३ अहरहरेतत् कुर्युरिति धानञ्जय्यशाण्डिल्यौ १४ सर्वस्तोम एवेति गौतमः १५ पृष्ठ्य इत्येके १६

इति दशमस्य चतुर्थी कण्डिका

अथ पञ्चमी कण्डिका

संवत्सरसम्मितासु प्रथमं दाशरात्रिकं प्रायणीयँ स्यादित्येके त्रिवृदेव कार्य्यमिति ह्याहेति १ प्रायणीयन्तु चोदयित्वा तस्य स्तोमविकारं गृह्णाति २ दाशरात्रिकाणाञ्चावयवप्रयोगो न विद्यते ३ आवृत्तेऽभिप्लवे शाक्वरवर्णँ स्यादित्याचार्य्याः सांवत्सरिकस्य द्रव्यस्यानुग्रहायेति ४ चतुर्थस्त्वभिप्लवो लुप्तस्तेन सहापेयाद्यथा पृष्ठ्येन जनित्रम् ५ सन्तनि पूर्वप्रयुक्तमावृत्तिसाधुत्वात् ६ यणवन्तु स्यादुपरिष्टाध्यभिप्लवानां लोषस्थानं पूर्वस्मिन् पक्षसि तत्पुरस्तादावृत्तानाम् ७ एतेनोक्तमेकषष्टिरात्रे ८ शतरात्रेऽभिप्रयायमभिषुणवन्त्वभिक्रान्त्यै समानत्राभिषुणवन्ति प्रतिष्ठित्या इति स विकल्पः स्यात् ९ यान्तः सुनुयुर्यथा सारस्वतेषु १० यत्र तु क्व च ११ समानदेशे वा यथान्येषामयान्त एव १२ चक्रीवन्ति सदोहविर्द्धानानि कारयित्वाहःसँस्थासु चक्राणि विपरिवर्त्तयेयुरित्याचार्य्यास्तदभिप्रयात्तद्रूपमप्रयाणाच्च समानत्राभिषवः १३ अहरहरेतत् कुर्युरिति धानञ्जय्यशाण्डिल्यौ १४ अभिप्लवेष्वेवेति गौतमः १५ त्रिकद्रुकेष्वित्येके १६ उक्तकालदीक्षा ब्राह्मणेन गवामयनस्य १७ वैशाखज्यैष्ठौ तु विकल्पेते चैत्रीपक्षेणाषाढश्च १८ षष्ठ्यां वा दीक्षित्वा सप्तदश दीक्षाः कुर्वीरन् १९ एतेनोक्तमनादेशे सांवत्सरिकानाँसांवत्सरिकाणाम् २०

इति दशमस्य पञ्चमी कण्डिका

अथ षष्ठी कण्डिका

पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्त इत्यभीवर्त्तस्तोत्रीया ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्ते १ अन्योन्यः प्रगाथ इति च नानाप्रगाथतां दर्शयति २ चतुःशतमैन्द्राबार्हता प्रगाथा दशतयीषु ३ तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्रस्थानाः ४ शत-

स्यैकं चतुर्विंꣳशे कुर्य्यादितरानभिप्लवेषु ५ एकोनत्रिंशत्सातो-बार्हतास्तृचाः ६ तेषामेकैकं तृतीये तृतीयेऽहनि कुर्य्यात्कृता ह्येत-स्मिंस्थान आर्षेयकल्पेन ७ पञ्चमस्य मासस्योत्तमेऽभिप्लवे पञ्चमे-ऽहनि सतोबृहतीः कुर्यात्प्रगाथाप्रभवात् ८ तेष्वाप्तेषु छन्दसी सं-युज्यैतव्यमिति षष्ठे मासि गायत्रीपादमेकैकमुष्णिहामुपरिष्टात् कुर्या-द्विष्टावानुपपत्तिर्ह्यन्यथा ९ सातोबार्हतशेषोऽष्टौ तान् कृत्वा संयोग इति गौतमः १० बृहतीक्षयाद्ध्येवमामनतीति ११ चतुरुत्तरैरेव छन्दोभिरेतव्यमिति गायत्रीं चतुर्विंꣳशे कुर्यादुष्णिहं प्रथम आभि-प्लविकेऽनुष्टुभं द्वितीये बृहतीरितरेषु १२ उद्धरेत्तु पञ्चमादह्नः सतो-बृहतीः प्रभवन्ति हि प्रगाथाः १३ तत्र पङ्क्तीः कृत्वा षष्ठे वा १४ त्रिष्टुभा षष्ठं मासमीयुः १५ जगती तु तृतीये स्वरसाम्नि १६ नव सातोबार्हतशेषो द्वौ च प्रगाथौ तान् कृत्वा पङ्क्तिमुपेयुस्तेषाञ्चोत्त-मस्यस्थाने तत ऊर्द्ध्वं त्रिष्टुभेति गौतमः १७

इति दशमस्य षष्ठी कण्डिका

## अथ सप्तमी कण्डिका

बृहत्या चैव त्रिष्टुभा चैतव्यमिति त्रिष्टुभं चतुर्विंशे कुर्याद्बृहतीं प्रथम आभिप्लविके १ एष विपर्यासः सर्वस्मिन्नयने २ एतानि महा-नानात्वानि ३ चतुरुत्तरप्रयोगो बृहतीत्रिष्टुभोश्च विपर्यासः षष्ठ एव मासि स्यादिति शौचिवृक्षिः सꣳशर इव वा एष छन्दसामिति हि तस्मिन्नुपोद्य विदधाति ४ सर्वत्रैवेत्याचार्य्याश्चतुरुत्तराणि ह्यनुपूर्वं प्रयुञ्जानो बृहतीं मध्य आमनति त्रिष्टुभा षष्ठं मासमिति चाह ५ बृहतीक्षयाच्च बृहत्या व्यत्यासो नोपपद्यते ६ सा प्राय्याद्बृहती-ग्रहणमिति शौचिवृक्षिस्त्रिष्टुभेति यथा भूयसो वादोऽक्षीणाश्च बृहत्यः ७ सातोबार्हतशेषो ह्यष्टौ बृहद्रथन्तरकालेयस्तोत्रीयाश्च तैस्त्रिष्टुभो व्यत्यस्येत् ८ तरणिरित्सिषासतीति कालेयꣳ स्याद्यदहस्तस्य स्तोत्रीयेऽभीवर्तः ९ स्वरसाम्नोर्वान्यतरस्मिन् रथन्तरस्तोत्रीयं कुर्यात् कृता हि तत्रान्या रथन्तरस्यैवं व्याचक्षत आचार्याः १० विंशतिशतं

त्वपि प्रगाथा न धीयते तेभ्य एव प्रयुञ्जीत सꣳरोधो हि चतुःशते ११ तत्र तथैव सतोबृहतीः कुर्यात् १२ उद्धरेत्तु पञ्चमादह्नः १३ शौचिवृद्धेः पुनर्विपर्यासोऽन्यायेनाकृतक्रिया हि विधानं कृताः पुनर्बृहद्रथन्तर-कालेयस्तोत्रीयाः १४

इति दशमस्य सप्तमी कण्डिका

## अथ अष्टमी कण्डिका

विꣳशतिशतस्य तु शेषो विद्यते तेषाꣳ सप्तभिः सातोबार्हतै-श्चतुर्भिर्व्यत्यस्येत् १ त्रयस्त्रिꣳशत्प्रभृतीन् सह चतुर्विꣳशेषु कुर्यादुत्तमे च स्वरसाम्नीत्याचार्या अभीवर्तप्रकरणे हि श्रूयन्ते सोऽत्राप्यभीवर्त इति २ अन्तरेण त्वेतावार्षेयकल्पेन कृतꣳ षट् प्रगाथमिहापि तथैव स्यात् ३ तेषां यत्र समप्रयोगे तृतीये तृतीयेऽहनि सतोबृहत्य उपपद्येरन् कुर्यादेनास्तत्र ४ अनुपपद्यमानासु प्रगाथा एव स्युरनाचारो हि षड-हेऽन्यत्र तृतीयादह्नः सतोबृहतीनाम् ५ स यथैव पुरस्तादभीव-र्तस्तोत्रीयं कुर्य्यात् तथोपरिष्टादिन्द्रक्रतौ ब्रह्मसामानि निधनव-न्त्येवꣳह्यार्षेयकल्पेन कृतम् ६ अतिरात्रचतुर्विꣳशाभ्याꣳ सह षष्ठो मासः पूर्वस्मिन्पक्षसि व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन् ७ यदेतानि सामानि न च्यवन्त इति गौरीवितस्योत्तरयोर्निहवश्यावाश्वे स्याताꣳ सर्वत्र गवामयनेऽनारभ्य ह्यच्यवनं विदधातीत्येके ८ अन्ववेत्य विधिस्त्वार्षेयकल्पेन कृतो गौरीवितश्यावाश्वयोर्निहवस्य च ब्राह्मणेन तथा सत्यच्यवनꣳ स्यात् ९

इति दशमस्य अष्टमी कण्डिका

## अथ नवमी कण्डिका

सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्युद्गातृविकार एव स्यादश्रुतिभूता ह्यन्ये १ अवाप्यते च सर्वशब्दस्तेष्वेव २ सह स्तुवीरन्निति कर्मसमवायात्पौर्वापर्य्यचोदनादनुपूर्वꣳ स्तवनꣳ स्यात् ३ तिसृभि-रुद्गातात्मन उद्गीयेति चात्मना जघन्यस्तवनं दर्शयति ४ नानादेश-

स्तवनं छन्दोगानामेव स्यादुद्गातैव सर्वेणोद्गायेदिति ह्युक्त्वा तस्य देशान् विदधाति हविर्द्धाने शिरसा स्तुत्वा सँरब्धाः प्रत्यञ्च एयुस्ते दक्षिणेन धिष्ण्यान् परीत्य पश्चान्मैत्रावरुणस्य धिष्ण्यस्योपविश्येति च ये शिरसा स्तुवते तेषामेवेतरैः स्तवनं दर्शयति ५ इलान्दमग्निष्टोमसाम कार्य्यमित्यग्ने तव श्रवो वय इत्येतासां पूर्वासु तिसृषु स्यात् ६ दशाक्षरेष्वार्चिकान्यनुगानान्येवं तृचे भवति यथान्यानि सामानि ७ षड्चे सर्वस्मिन्नित्याचार्याः अर्द्धर्चेष्वनुगानान्येवमसँरोधतरो गीतानाम् ८ द्वादशर्च इति शाण्डिल्यस्तत्रापरावाग्नेयौ तृचावाहरेदा ते अग्नेऽग्निं तं मन्य इत्येवमृक्ष्वनुगानानि ९ चतुर्थमेवानुगानं तृचे स्यादिति वार्षगण्योऽत्र हि निधनवादं वदति व्रतमिति भवति स्वरिति भवति शकुन इति भवतीति भक्तयश्च कल्प्यन्ते नानासामवच्चैनान्येकेऽधीयतेऽधीयते १०

इति दशमस्य नवमी कण्डिका

अथ दशमी कण्डिका

छन्दोमदशाहयोर्दशमस्य त्रयस्त्रिँशमग्निष्टोमसाम स्यादित्येके त्रिकँ सार्पराज्ञं दशमप्रदेशात् १ यथा भूयसोवादश्चतुर्विँशमिति २ ऋक्सामानि तु प्रदिश्यन्ते दशमात्सर्वँ ह्यहरधिकृत्य चोद्यते चतुर्विँशः ३ प्रत्यक्षविकारश्च यथा भूयसो वादात् ४ ब्राह्मणविहिते च स्तोमे कल्पप्रदेशः ऋक्साम्नां भवति ५ त्रिँशिनः सुत्यामासान् सर्वत्र सञ्चक्षीरन् कौण्डपायिने च हाविर्यज्ञिकाँस्तापश्चिते च दैक्षोपसदान् ६ दृतिवातवतोरयने द्वावेकोनौ मासौ सुनुयुस्त्रिवृताविति गौतमः ७ त्रयस्त्रिँशाविति धानञ्जय्यः ८ उभौ वा त्रिँशिनौ स्यातां यथैतद्ब्राह्मणम् ९ तथा सत्यष्टम्यां दीक्षित्वा पञ्चदश दीक्षाः कुर्वीरन् १० पञ्चदशानां दशमस्याष्टादँष्ट्रान्तान्युक्थानि स्युरित्याचार्याः षोडश्यपायाद्धि निवृत्तं नार्मेधमिति ११ अवचनात्तु निवृत्तिर्न स्याद्यथान्येषाँ साम्नाम् १२ वचनञ्च कारणं नार्मेधस्य न षोडशी १३ दृश्यते चाभीक्ष्णमषोडशिकेषु १४ तस्या-

यनविचाराः पृष्ठ्येनैकैको मासो वर्तेतेत्येके १५ पृष्ठ्यस्तोमेनेति शाण्डिल्यः १६ अभिप्लवपृष्ठ्याभ्यामिति शौचिवृक्षिः १७ पृष्ठ्याह्नैकैकेनेति शाण्डिल्यायनधानञ्जय्यौ १८ ज्योतिष्टोमेनेति लामकायनस्तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् १९ यथैवार्षेयकल्पेनोक्तमिति क्षैरकलम्भिः २०

इति दशमस्य दशमी कण्डिका

अथ एकादशी कण्डिका

पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य १ तस्योपसदन्त उपवसथकर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्य एवँ हि गृह्यते वृत्तिः २ तत ऊर्द्ध्वं प्रातराहुत्युपक्रमाः सायमाहुतिसँस्था एकान्नत्रिँशतमहान्यग्निहोत्रं जुहुयुः ३ मासमेवेति गौतमः सुत्यानान्तु पुरस्तादुपवसथकर्म स्यादतिरात्रश्चैवञ्च गृह्यते वृत्तिरव्यवायश्च हविर्यज्ञैः सुत्यानाम् ४ अश्रवणादतिरात्रो न स्यादिति धानञ्जय्यः प्रत्यन्ताद्धयन्येषु चोदयन्नेह विदधाति ५ उपसदन्त एवोपवसथकर्म स्यात् ६ अष्टादशभ्यो वोर्द्ध्वँ शौनासीर्य्येभ्यो राजानं क्रीणीयुरेवमनन्तरँ सुत्याभ्यो भवतीति ७ दीक्षोपसदां व्यवायो न्याय इति शाण्डिल्यायनस्ते मासि सोमं क्रीणन्तीति वानन्तरं दीक्षाभ्यः क्रयं दर्शयति ८ उपवसथकर्मैवानन्तरँ सुत्याभ्यः स्यात् ९ आग्नीध्रीयादङ्गारान्मार्जालीयँ हृत्वा पृथक् स्थालीपाकान् श्रपयित्वा पितृयज्ञान् कुर्वीरन् १० ततो दक्षिणातिप्रणयेयुः पैतृयज्ञिकायाम् ११ आहवनीयाद्दक्षिणतो वरुणप्रघासेषु तस्मिन् कुर्य्युर्यद्दक्षिणाहवनीये कृत्यमुपवसथकर्म चेत् कृतँ स्यात् १२ यथा प्रकृत्यकृते १३ अग्निहोत्रमासे दीक्षितान्नस्याध्वर्युर्जुहुयादन्वारब्धा इतरे स्युः १४ हवीँष्येवेष्ट्ययनेषूपावद्येयुः १५

इति दशमस्य एकादशी कण्डिका

## अथ द्वादशी कण्डिका

अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूꣳषीति न क्रियेरन्नवभृथ-न्यङ्गश्चेति शाण्डिल्यः १ समिधस्त्वादध्युर्य्यास्तत्र पुरस्तादुक्ताः २ सर्वं क्रियेतेति धानञ्जय्यः ३ मासं दर्शपूर्णमासाभ्यामित्यामावास्येन पूर्वपक्षमितरं पौर्णमासेन ४ आमावास्ये पितृयज्ञः सकृद्धूत्वा न स्यादिति गौतमः ५ न सकृच्च न स्यादिति शाण्डिल्यः ६ अहरहः स्यादिति धानञ्जय्यः ७ मासꣳ साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषꣳ सꣳस्थापयेयुरेवं त्रिꣳशत्कृत्व उपेता भवन्तीति ८ द्व्य-हापवर्गस्त्वेषां प्रकृतौ पञ्चदशकृत्व एवाभ्यस्येयुः स मासः ९ अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवोऽग्निहोत्रोपस्थानमधीयते १० ऋत्विज उत्तरैरभिप्रेताः ११ वषट्कारिणोऽध्वरे १२ अत्सरुकै-श्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः १३ होत्रा समास उक्तो ब्राह्मणेन १४ स्वादासनादुपसञ्चारं ब्रह्मेतरे होत्रे कुर्यात् १५ तथोद्गातृप्रस्तोता-रावाग्नीध्रश्च १६ गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यइत्यसमा-सन्तयोर्द्दर्शयति १७

इति दशमस्य द्वादशी कण्डिका

## अथ त्रयोदशी कण्डिका

एतेनोक्तस्तापश्चितस्य दीक्षादिः १ तस्यायनविचाराः २ ज्योतिष्टोमो-ऽतिरात्रः षोडशिमानहरहः स्यादिति धानञ्जय्यः ३ चत्वारो ज्योति-ष्टोमा अभिजिदेष पञ्चाहः षट्सु मासेष्वभ्यस्येत महाव्रतं विषुवानथैत एव मासा आवृत्ता विश्वजित्त्वभिजित्स्थाने तत्पुरुषस्य नाराय-णस्यायनम् ४ अभिजिदहरहस्तदग्नेर्ज्योतिष्टोमो वा रथन्तरपृष्ठः ५ बृहत्पृष्ठ इन्द्रस्य ६ व्यत्यासं बृहद्रथन्तरे पृष्ठे तदिन्द्राग्न्योः ७ उभय-सामा ब्रह्मप्राजापत्योः ८ वायोर्वैरूपपृष्ठो व्रतं वा ९ आदित्यस्य वैराजपृष्ठो विश्वजिद्वा १० अपां शक्वरीपृष्ठः ११ गवां रेवतीपृष्ठः १२ प्रजापतेर्वामदेव्यपृष्ठः १३ विश्वेषां देवानाꣳस्वरपृष्ठः १४ सूर्य्यस्य दिवाकीर्त्यपृष्ठः १५ महेन्द्रस्य महाव्रतपृष्ठः १६ ज्योतिष्टोमेन

त्रीण्युत्तराणि तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् १७ यथैवार्षेय-
कल्पेनोक्तमिति क्षैरकलम्भिः १८
इति दशमस्य त्रयोदशी कण्डिका

अथ चतुर्द्दशी कण्डिका

अग्निष्टोमास्त्रिवृत उक्थ्याः पर इति तत्रावचनादतिरात्रा न
स्युर्विषुवन्तश्चेति शाण्डिल्यः १ इतरः सत्रन्याय इति धानञ्जय्यः २
अतिरात्रावभितः स्यातां मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यन्दिनः
पञ्चदशः सप्तदशः ३ एकैकस्मिन्वैतत्संवत्सरवर्गे स्यात् ४ उत्तम-
मुत्तमे वा संवत्सरे ५ पृथग्वा संवत्सरेषु ६ तेषां यथास्तोमं विषुवन्तः
स्युः ७ रथन्तरपृष्ठो बृहद्ब्रह्मसामा त्रिवृताꣳस्याद्बृहत्पृष्ठो रथन्तर-
मध्यन्दिनः परेषु ८ यजनीयेऽहनि प्रसवः स्यात् पूर्व्वपक्षे
यद्यविषुवत्काः समार्द्धमासातिवर्त्तिषु ९ अपरपक्षे विषमेषु १०
सहस्रसाव्ये सहातिरात्राभ्याꣳ सहस्रमहानीत्याचार्य्याः सहस्रसा-
व्यमिति ह्याहेति ११ अन्तरेणेति शौचिवृक्षिः सहस्रमहानीत्य-
न्तरेणातिरात्रावाह १२ तस्यायनविकल्पस्त्रिकद्रुकाश्चतुःषष्ठꣳशतम-
भिप्लवानां दशरात्रो व्रतमिति दशरात्रो व्रतमिति १३
इति दशमस्य चतुर्द्दशी कण्डिका

अथ पञ्चदशी कण्डिका

दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वताय षष्ठ्या-
म्पक्षस्येति गौतमः १ अमावास्यायामतिरात्रः स्यादेवꣳस्वस्थानमा-
मावास्यं प्रयुज्यते २ सप्तम्यां वा दीक्षित्वामावास्याया यजनीये-
ऽहन्यतिरात्रः स्यादिति धानञ्जय्यः ३ समाधय उत्तराभ्याꣳसुत्या-
भ्याम् ४ स्वस्थानञ्चैवामावास्यं प्रयुज्यते ५ पूर्वपक्षो ह्यामा-
वास्यस्थानमिति ६ पुरा रात्रेः सायं दोहं दोहयेरन् सꣳस्थितेऽतिरात्रे
प्रातर्दोहं तेन सान्नाय्येन यजेरन् ७ सान्नाय्येनेष्ट्वाध्वर्युः शम्यां परा-

स्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्यमिष्टिसꣳस्थासु प्रास्येत्तदुक्तं ब्राह्मणेन ८ चक्रीवत्ता च तथापि पत्नीशाला स्याच्छामित्रञ्च ९ तानि यथादेशं वर्त्तेरन् समश्चेद्भूमिभागः स्यात् १० अनुपूर्वं विषमे ११ वेदेः पाꣳशून् हरेयुस्तथोत्तरवेदेर्विष्ण्येभ्यश्च १२ तान्निविश्य यथायतनं निवपेयुः १३ उलूखलबुध्नो यूप इति पृथुबुध्नः स्यात् १४ प्रकृष्य इति तं पूर्वं कर्षेयुरेवानुद्यछन्तः १५ उपोप्त एवेत्यनिखातस्तिष्ठेत् पाꣳशुभिः पर्युप्तः १६ नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवा नाम श्वभ्रास्तेषां प्रतिषेध आलिखेयुरेवैनान्न खनेयुः १७

इति दशमस्य पञ्चदशी कण्डिका

## अथ षोडशी कण्डिका

तेषां पौर्णमास्यां गोष्टोमः स्तोमो भवतीति यजनीयेऽहनि स्यादित्याचार्याः सꣳस्थिते गोष्टोमे पौर्णमासमिति हि सꣳस्थानान्ताद्विदधाति १ ते तमापूर्यमाणं तेतमपक्षीयमाणमिति च कृत्स्नवत्पक्षाभिधानम् २ पर्वणि त्वेव स्यात्तेषां पौर्णमास्यां तेषाममावास्यायामिति हि प्रत्यक्षेण विदधाति ३ कर्मानन्तर्यमात्रन्तु सꣳस्था दर्शपूर्णमासयोः ४ ते तमापूर्यमाणन्ते तमपक्षीयमाणमिति च यथा भूयसो वादः ५ सꣳस्थिते गोष्टोमे तदहरेव पौर्णमासेन हविषेष्ट्वोद्युञ्जीरन्निति ६ अयजमानास्तत्रैव तां रात्रिं वसेयुरिति गौतमः ७ उद्युञ्जीरन्नेवेति शाण्डिल्यः श्वोभूते तु यजेरन् ८ एतेनायुर्व्याख्यातः ९ तत्र धानञ्जय्येनामावास्यायाꣳसायन्दोहं दोहयेरन् पुरा प्रातरनुवाकात्प्रातर्दोहम् १० अतिचिरमेवं दुग्धꣳसान्नाय्यन्तिष्ठेदिति शाण्डिल्यायन इतरयोरेवान्यतरत् कुर्युरिति ११ कौण्डपायिने भोजनमुक्तमिष्टचयनेषु दर्शपूर्णमासधर्माश्च १२ चन्द्रप्रमाणास्त्वेव पर्वसु
स य ु :
१३

इति दशमस्य षोडशी कण्डिका

## अथ सप्तदशी कण्डिका

दृषद्वत्या अप्ययेऽपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात् १ अप्यनुदकायामिति धानञ्जय्यः २ शते गोष्वृषभमप्यृजन्तीति वत्सतरी शते गर्भिणीषु ३ ता यत्र गव्यमभयꣳस्यात्तत्र रक्षेयुः ४ पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च ५ तासु सहस्रꣳसम्पन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दत्त्वैता उत्तिष्ठेयुः ६ यदा सर्वज्यानिञ्जीयन्त इति तासामेवाधिकारः प्रकरणभूतत्वात्तत्र विश्वजिदतिरात्रः ७ मृते गृहपतावायुः ८ प्रादुर्भावान्तादेतयोरापदोरुत्तिष्ठेयुरप्यपरपक्षे ९ न सकृच्चन सरस्वत्यामवभृथमभ्यवेयुर्देवयजनभूता ह्येषां भवति १० अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्तु ११ यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानमिति तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुरिति गौतमः १२ यदेनात्किञ्चिदुत्थानमागच्छेदिति धानञ्जय्यः प्रायणीयमेवातिरात्रमुपेत्योत्तिष्ठेयुरिति १३ प्लक्षं प्रास्रवणमागम्य पुरस्तादतिरात्रस्याग्नये कामायेष्टिः स्यादिति शाण्डिल्यः १४ उपरिष्टादिति धानञ्जय्यः १५ तस्यामश्वाञ्च पुरुषीञ्च धेनुके यज्ञोपकरणशेषाꣳश्चाभिरूपायान्यस्मै दद्युः १६ स्वामिनो हि सर्वे सत्रेषु तेषां प्रतिग्रहं न विद्यते १७ उक्तोऽवभृथो ब्राह्मणेन १८ अपृष्टशमनीयमेतत् १९

इति दशमस्य सप्तदशी कण्डिका

## अथ अष्टादशी कण्डिका

एतेनैवोत्तरे व्याख्याते १ तत्राग्नये कामायेष्टिरपोनप्त्रीया च स्रुवहोमौ स्याताम् २ इष्टिरेवाग्नये कामायोपरिष्टाच्चेदतिरात्रस्येति शाण्डिल्यः ३ पर्वणोरिन्द्रकुक्षी ४ पूर्वस्याग्निष्टोमौ त्रिवृती राथन्तरबार्हते पूर्वपक्ष उक्थ्ये पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमः ५ ते न पक्षयोः सञ्चारयेत् ६ सर्वत्र त्वेव त्रिवृत्पञ्चदशे व्यत्यासꣳ स्याताम् ७ तयोर्यस्मिन्ननुपेते पर्वागच्छेत्तेनोत्तरं पक्षमुपक्रमेत ८ एतेनोक्तमुत्तरस्य त्रिकद्रुकेषु ९ दार्षद्वततौरयोर्व्रतानि १० तिष्ठेद्दिवासीत नक्तꣳ

हविरुच्छिष्टभोजी स्यादधःसंवेश्यमा॑ साश्यलवणाशी न स्त्रियमुपेयाद्यथा प्रकृत्याहिताग्निवृत्तिं वर्तयेत् ११ दार्षद्वते संवत्सरं ब्राह्मणस्य गारक्षेदित्यृत्विज आचार्य्यस्य वा १२ नैतन्धवाना मार्माः सरस्वत्यां तेषामेको व्यर्णस्तस्मिन् संवत्सरमग्निमिन्धीत यैकाग्नेः परिचर्य्या तया १३ अग्निहोत्रमेव जुह्वत् पुरस्ताच्चेदाहिताग्निः १४

इति दशमस्य अष्टादशी कण्डिका

अथ ऊनविंशी कण्डिका

संवत्सरादूर्ध्वं परीणं नाम स्थली कुरुक्षेत्रे तस्यामग्नीनाधाय यथाकालमन्वारम्भणीययेष्ट्वा प्रसृज्येतेति शाण्डिल्यः १ दर्शपूर्णमासाभ्यां यजेतेति धानञ्जय्यः २ सायंप्रातराहुती एव हुत्वा पुरस्ताच्चेदाहिताग्निः ३ सरस्वतीदृषद्वत्योः सम्भेदं प्राप्याग्नेन्येनाष्टाकपालेन यष्टुमुपक्रमेत ४ तत्र शम्याप्रासनं यथा सारस्वतेषु ५ न तु प्रक्रमात्प्रक्रामेत् ६ काममनेकामिष्टिमेकैकेनाह्ना स॑स्थापयेत् ७ दृषद्वत्या दक्षिणेन तीरेणेयात् ८ तस्याः प्रभव्यममर्मं प्राप्यैतयेष्टयेष्ट्वा त्रिप्लक्षावहरणं प्रति यमुनामवभृथमभ्यवेयात् ९ यत्र क्वच ततो दूरे यमुना स्यात् तत्रैतयेष्टयेष्ट्वा स्वय॑ साम गायन्नवभृथमभ्यवेयादगायन्वा १० प्रव्रजिष्यतोऽयनमिदं मन्य इति धानञ्जय्यस्तदेव मनुष्येभ्यस्तिरोभवतीति ११ न ग्रामं पुनरेयादितीव १२ स्वर्गं लोकमाक्रमते १३ व्यावर्तते श्रेयान् भवतीति वा १४ उदकान्तर्द्धानाद्वा यथा सरजस इति १५

इति दशमस्य एकोनविंशी कण्डिका

अथ विंशी कण्डिका

संवत्सरमहरहस्तौरेण यजेत १ षष्ठ्यां चैत्रीपक्षस्य पञ्चम्यामिति गौतमो व्रतोपायनीयमोदनमशित्वा केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय परिसमुह्याग्नीन् परिस्तीर्य्य प्रणीताः प्रणीय मेखलामाबध्य दण्डं पाणौ कृत्वा पश्चाद्गार्हपत्यस्योपविश्य स्वयं

कृष्णाजिनं प्रतिषजेत तूष्णीम् २ पश्चिमेनाहवनीयं दक्षिणातिक्रम्यैतत् कुर्य्यात् ३ तस्य तिस्र इष्टयः पूर्वाह्ण एका पृथक् च मध्यन्दिनापराह्णयोः ४ स तासु पृथगनुपूर्वꣳ हवीꣳषि यान्युक्तानि ब्राह्मणेन ५ एका वैव स्यात्तस्यां तानि सर्वाणि स्युः ६ संवत्सरादूर्द्ध्वमवभृथमभ्यवेयात्तत्र सामगानं यथा पूर्वस्मिन् ७ उभयोस्त्ववभृयादुदेत्य यत् पुरस्तादिष्ट्ययनं तेनेष्ट्वा सोमेन यजेत ८ यावन्ति वा हवीꣳषि पुरस्तात्तावद्भिर्वा पशुभिस्तद्देवत्यैः ९ षण्डकुषण्डावभिगरापगराविति ह्याहेति १० प्रत्यक्षविहितं त्वार्षेयकल्पेन तत्रानुमानं न विद्यते ११ अभिगरापगरावेवोपोत्तमेऽहनि स्याताम् १२ पौर्णमासीप्रसवं त्रिसंवत्सरम् १३ तस्य याथाकामी दीक्षाणाम् १४ षष्टिरिति शाण्डिल्यः १५ प्रथमोत्तमौ संवत्सरौ व्यतिहरेदित्येकेऽभिप्लवस्तोमपृष्ठ्यदेशरोहार्थ इति १६ यथाम्नायमेवोपेयुः १७ अमावास्याप्रसवे सहस्रसंवत्सरे सहस्रसंवत्सरे १८

इति लाट्यायनसूत्रे दशमः प्रपाठकः

लाट्यायनसूत्रं समाप्तम्

Reference:
Vedantavagisa, Ananda Chandra, ed., *Śrauta-sūtra of Lātyāyana with the commentary of Agniswāmī*, (New Delhi: Munshiram Manoharlal Publishers Pvt. Ltd., 1982).[Originally published in 1872 by Asiatic Society, Calcutta.]